दमदह्यानतः ) विषाद और अहङ्कारके नष्ट हो जाने के कारण ( सदा प्रह-सितायमानं ) निरतर हंसते हुएकी तरह ( ते मुखं ) आपका ये मुख (आत्यंतिकीं) अत्यंत ( हृदयशुद्धिं ) हृदयकी शुद्धिको ही ( कथयति इव ) मानो कहता है।

निराभरणभासुरं विगतरागवेगोदयात् ।
निरम्बरमनोहरं प्रकृतिरूपनिर्दोषतः ॥
निरायुधसुनिर्भयं विगतहिंस्यहिंसक्रमात् ।
निरामिषसुतृप्तिमद्विविधवेदनाना क्षयात् ॥ ३२ ॥

*अन्वयार्थ.*—( विगतरागवेगोदयात् ) जिनेन्द्र भगवान् का स्वरूप राग के वेगके उदयका अभाव हो जानेसे ( निराभरणभासुर ) आभरणके विना भी सुन्दर है, ( प्रकृतिरूपनिर्दोषतः ) निर्दोष प्रकृति स्वरूप होनेके कारण ( निरंबरमनोहरं ) विना वस्त्रके ही सुन्दर है, ( विगतहिंस्यहिंसक्रमात ) हिंस्य और हिंसक भावके नष्ट हो जानेसे ( निरायुधसुनिर्भय ) विना आयुधके ही निर्भय है विविधवेदनाना क्षयात् ) जन्म, मरण आदि नानाप्रकारकी वेदनाओंके नष्ट हो जाने से ( निरामिषसुतृप्तिमद् ) भोजनादिसे रहित होकर भी अत्यन्त तृप्तिको प्राप्त हैं।

मितस्थितनखागजं गतरजोमलस्पर्शनम् ।
नवाम्बुरुहचंदनप्रतिमदिव्यगंधोदयम् ॥
रवीन्दुकुलिशादिदिव्यबहुलक्षणालंकृतम् ।
दिवाकरसहस्रभासुरमपीक्षणानां प्रियम् ॥ ३३ ॥

*अन्वयार्थ* —( मितस्थितनखागजं ) जिनेन्द्र भगवान् के शरीरके नख और केश परिमित रहते हैं—वृद्धिको प्राप्त नहीं होते हैं, ( गतरजोमलस्पर्शन ) रजो-मलके स्पर्शसे रहित हैं ( नवाम्बुरुहचदनप्रतिमदिव्यगधोदय ) नवीन कमल और चन्दनके सदृश, दिव्य जिनके शरीरमें सुगध आती है ( रवीन्दुकुलिशादि-दिव्यबहुलक्षणालकृत ) सूर्य, चन्द्र, वज्र इत्यादि दिव्य एक हजार आठ लक्षणों से जो शोभायमान हैं ( दिवाकरसहस्रभासुरं अपि ईक्षणाना प्रिय ) और हजारों सूर्यके समाम देदीप्यमान होते हुये भी देखनेवालोंको जो अत्यन्त प्रिय हैं।

हितार्थपरिपंथिभिः प्रबलरागमोहादिभिः ।
कलंकितमना जनो यदभिवीक्ष्यशोशुध्यते ॥

सदाभिमुखमेव यज्जगति पश्यतां सर्वतः ।
शरद्विमलचन्द्रमण्डलमिवोत्थितं दृश्यते ॥ ३४ ॥

*अन्वयार्थः* — ( हितार्थपरिपथिभि प्रबलरागमोहादिभिः ) हितरूपी अर्थ जो मोक्ष उसको चुरानेवाले ऐसे जो प्रबल राग और मोहादिक उनसे (कलकितमना जनः) जिसका मन दूषित है ऐसा मनुष्य भी ( यद् अभिवीक्ष्य ) जिस सुन्दररूपको देखकर ( शोशुध्यते ) शुद्ध हो जाता है, उसीप्रकार ( जगति ) ससारमें ( यत् सदाभिमुख एव पश्यता सर्वतः ) जिनेन्द्र भगवानके विरागी मुखको देखनेवालोंको चारों ओर वह (शरद्विमलचन्द्रमडलं इव उत्थित दृश्यते) शरदऋतुमें उदयको प्राप्त हुए स्वच्छ पूर्ण चन्द्रमाके समान दीखता है।

तदेतदमरेश्वरप्रचलमौलिमालामणि-
स्फुरत्किरणचुंबनीयचरणारविंदद्वियम् ।
पुनातु भगवज्जिनेन्द्र तव रूपमन्धीकृतम् ।
जगत्सकलमन्यतीर्थगुरूपदोषोदयैः ॥ ३५ ॥

*अन्वयार्थः* — ( अन्यतीर्थगुरूपदोषोदयैः ) मिथ्या तीर्थके खोटे उपदेश से उत्पन्न हुए दोषोंसे ( अन्धीकृत सकल जगत ) अधे हुए इस सम्पूर्ण जगत् को ( भगवत् जिनेन्द्र ! ) हे भगवन् जिनेन्द्र ! ( तत् एतत् अमरेश्वरप्रचलमौलिमालामणिस्फुरत्किरणचुंबनीयचरणारविंदद्वयं तव रूप पुनातु ) इन्द्रादिकके नमस्कार करते समय उनके मुकुटके मणियोंकी कातिसे जिनके दोनों चरण रूपी कमल स्पर्श किये गये हैं ऐसा अत्यन्त मनोहर आपका सुन्दर रूप पवित्र करो।

इसके बाद कायोत्सर्ग करना चाहिये।

आलोचना—

इच्छामि भंते चेइयभत्ति काउस्सग्गो कओ तस्सालोचेउं। अहलोयतिरियलोयउड्ढलोयम्मि किट्टिमाकिट्टिमाणि जाणि जिणचेइयाणि ताणि सव्वाणि तिसुवि लोएसु भवणवासियवाणविंतरजोइसियकप्पवासियत्ति चउविहादेवा सपरिवारा दिव्वेण गंधेण, दिव्वेण चुण्णेण, दिव्वेण वासेण, दिव्वेण ण्हाणेण, णिच्चकालं अंचंति, पुज्जंति, वदंति, णमंसंति, । अहमवि इह संतो तत्थ संताई णिच्चकाल अंचेमि, पूजेमि, वंदामि, णमंसामि,

दुक्खक्खओ, कम्मक्खओ, बोहिलाहो, सुगइगमणं, समाहिमरणं, जिण-गुणसंपत्ति होउ मज्झं।

अर्थ—हे भगवन्! मै चैत्यभक्ति कर कायोत्सर्ग करता हू। इसमें जो दोष लगे हों उनकी आलोचना करना चाहता हू। अधोलोक, मध्यलोक व ऊर्ध्व-लोकमें जो कृत्रिम वा अकृत्रिम चैत्यालय हैं उन सबकी तीनों लोकोंमें रहनेवाले भवनवासी, व्यन्तर, ज्योतिष्क और कल्पवासी चारों प्रकारके देव परिवारको साथ लेकर दिव्य गधसे, दिव्य चूर्णसे, दिव्य वस्त्रसे, और दिव्य अभिषेकसे, सदा अर्चा करते हैं, पूजा करते हैं, वदना करते हैं, और नमस्कार करते हैं। मैं भी यहा ही रहकर उसीप्रकारसे सदा समस्त चैत्यालयोंकी अर्चा करता हूं, पूजा करता हू, वदना करता हूं, और नमस्कार करता हू। मेरे दुःखोंका नाश हो, कर्मोंका नाश हो, मुझे रत्नत्रयकी प्राप्ति हो, शुभगतिकी प्राप्ति हो, समाधि-मरणकी प्राप्ति हो, और भगवान् जिनेन्द्रदेवके समस्त गुणोंकी तथा विभूतियों की प्राप्ति हो।

इति चैत्यभक्तिः।

---

क्षेपक श्लोकः—

मानस्तम्भाः सरांसि प्रविमलजलसत्खातिका पुष्पवाटी। प्रकारो नाट्यशाला द्वितयमुपवनं वेदिकांतर्ध्वजाद्याः॥ शालःकल्पद्रुमाणां सुपरिवृतवनं स्तूपहर्म्यावली च। प्राकारःस्फाटिकोन्तर्नृसुरमुनिसभा पीठिकाग्रे स्वयंभूः॥ १॥ वर्षेषु वर्षान्तरपर्वतेषु, नदीश्वरे यानि च मदरेषु। यावन्ति चैत्यायतनानि लोके सर्वाणि वंदे जिनपुङ्गवानाम्॥ २॥ अवनितलगतानां कृत्रिमाऽकृत्रिमाणाम्। वनभवनगतानां दिव्यवैमानिकानाम्॥ इह मनुजकृतानां देवराजार्चितानाम्। जिनवरनिलयानां भावतोऽहं स्मरामि॥ ३॥ जम्बूधातकिपुष्कराद्र्धवसुधाक्षेत्रत्रये ये भवाश्चंद्रांभोजशिखण्डिकण्ठकनकप्रावृड्घनाभाजिनः। सम्यग्ज्ञानचरित्रलक्षणधरा दग्धाष्टकर्मेन्धनाः भूतानागतवर्तमानसमये तेभ्यो जिनेभ्यो नमः॥ ४॥ श्रीमन्मेरौ कुलाद्रौ

रजतगिरिवरे शाल्मलौ जंबुवृक्षे, वक्षारे चैत्यवृक्षे रतिकररुचके कुण्डले मानुषांके। इष्वाकारेऽञ्जनाद्रौ दधिमुखशिखरे व्यंतरे स्वर्गलोके। ज्योतिर्लोकेऽभिवंदे भुवनमहितले यानि चैत्यानि तानि ॥ ५ ॥ देवासुरेंद्रनरनागसमर्चितेभ्यः, पापप्रणाशकरभव्यमनोहरेभ्यः। घंटाध्वजादिपरिवारविभूपितेभ्यो,–नित्यं नमो जगति सर्व जिनालयेभ्यः ॥ ६ ॥

## अथ कल्याणालोचना

परमप्पइ वड्ढमई परमेट्ठीणं करोमि णवकारं।
सगपर सिद्धिणिमित्त कल्लाणालोयणा वोच्छे ॥ १ ॥

परमात्मानं वर्द्धितमतिं परमेष्ठिनं करोमि नमस्कारम्।
स्वकपरसिद्धिनिमित्तं कल्याणालोचनां वक्ष्ये ॥

अर्थ–जिनका ज्ञान अनंत परिणाम तक बढ़ा हुआ है ऐसे अरहंत परमेष्ठी को मैं नमस्कार करता हूं तथा अपने आत्माकी सिद्धिके लिये और अन्य जीवों के कल्याणकी सिद्धिके लिये मैं कल्याणालोचना कहता हूं।

रे जीवा णंत भवे संसारे संसरंत वहुवारं।
पत्तो ण वोहिलाहो मिच्छत्तविजंभपयडीहिं ॥ २ ॥

रे जीव अनंतभवे संसारे संसरन्ता वहुवारम्।
प्राप्तो न वोधिलाभः मिथ्यात्वविजंभितप्रकृतिभिः ॥

रे जीव! मिथ्यात्वकर्मकी बढ़ी हुई प्रकृतियोंके द्वारा इस अनंत जन्ममरण रूप संसारमें तूने अनंतवार परिभ्रमण किया परंतु अबतक तुझे रत्नत्रयकी प्राप्ति कभी नहीं हुई।

संसारभमणगमणं कुणंत आराहिओ ण जिणधम्मो।
तेणविणा वर दुक्ख पत्तोसि अणतवाराइं ॥ ३ ॥

संसार भ्रमणगमनं कुर्वन् आराधितो न जिनधर्मः।
तेन विना वरं दुःख प्राप्तोऽसि अनन्तवारम् ॥

अर्थ–इस संसारमें परिभ्रमण करते हुये तूने जिनधर्मका आराधन कभी नहीं किया और उसी जिन धर्मके विना इस संसारमें तुझे अनन्तवार महा दुःख

प्राप्त हुए हैं।

संसारे णिवसंता अणंतमरणाइ पाविओसि तुमं।
केवलिणा विण.तेसिं संखापज्जत्ति णो हवइ ॥ ४ ॥

संसारे निवसन् अनन्तमरणानि प्राप्तोऽसि त्वम्।
केवलिना विना तेषां संख्या पर्याप्तिर्न भवति ॥४॥

अर्थ—इस ससारमें निवास करते हुये तूने अनन्तवार मरण किये परतु केवल उस एक जैनधर्मके विना उन मरणोंकी संख्या पूरी नहीं हुई, अर्थात जन्ममरण का अंत नहीं हुआ।

तिण्णिसया छत्तीसा छावट्ठिसहस्सवार मरणाइ।
अंतो मुहुत्तमज्झे पत्तोसि णिगोयमज्झम्मि ॥ ५ ॥

त्रीणिशतानि षट्त्रिंशानि षट्षष्टि सहस्रवारमरणानि।
अंतर्मुहूर्तमध्ये प्राप्तोऽसि निगोदमध्ये ॥ ५ ॥

अर्थ—हे जीव ! तूने निगोदमें अन्तर्मुहूर्तकालमें छयासठ हजार तीन सौ छत्तीस वार मरण किया।

वियलिंदिये असीदी सट्ठी चालीसमेव जाणेहि।
पंचेंदिय चउवीसं खुद्दभवंतोमुहुत्तस्स ॥ ६ ॥

विकलेन्द्रिये अशीतिं षष्टिं चत्वारिंशत् एव जानीहि।
पंचेन्द्रिये चतुर्विंशतिं क्षुद्रभवान् अन्तर्मुहूर्तं ॥

अर्थ—हे जीव ! तूने दो इन्द्रिय अवस्थामें अंतर्मुहूर्त कालमें अस्सी क्षुद्रभव धारण किये। तेइन्द्रिय अवस्थामें साठ क्षुद्रभव धारण किये, चौइंद्रिय पर्याय में चालीस क्षुद्रभव धारण किये और पंचेंद्रिय पर्यायमें चौबीस क्षुद्रभव धारण किये।

अण्णोण्णं खज्जंता जीवा पावंति दारुणं दुक्खं।
ण हु तेसिं पज्जत्ती कहपावइ धम्ममइसुण्णो ॥ ७ ॥

अन्योन्यं कुध्यन्ते जीवा प्राप्नुवन्ति दारुणं दुःखम्।
न खलु तेषां पर्याप्ती: कथं प्राप्नोति धर्ममतिशून्य: ॥

अर्थ परस्पर एक दूसरेके साथ क्रोध करते हुये ये जीव अत्यन्त घोर दुःख पाते हैं। उनकी कभी पर्याप्ति ही पूरी नहीं होती फिर भला धैर्यरूप बुद्धिसे सर्वथा रहित वे जीव इस जिन धर्मको कैसे धारण कर सकते हैं।

मायापिया कुण्डवो सुजणजण कोवि णायई सत्थे।
एगागी भमइ सदा णहि वीओ अत्थि संमारे ॥ ८ ॥

माता पिता कुटुम्बः स्वजनजनः कोपि नायाति सह ।
एकाकी भ्रमति सदा न हि द्वितीयोऽस्ति संसारे ॥

इस संसारमें परिभ्रमण करते हुये इस जीवके साथ माता पिता कुटुम्बी लोग तथा अपने परिवारके मनुष्योंमें से कोई भी साथ नहीं जाता। यह जीव सदा अकेला परिभ्रमण किया करता है। इसका साथी कोई दूसरा नहीं होता।

आउक्खएवि पत्ते ण समत्थो कोवि आउदाणेय।
देवेंदो ण णरेंदो मणिओसह मतजालाई ॥ ९ ॥

आयु क्षयेपि प्राप्ते न समर्थः कोपि आयुर्दाने च ।
देवेंद्रो न नरेन्द्रः मण्यौषधमन्त्रजालानि ॥ ९ ॥

अर्थ—जब आयुका अत आ जाता है आयुपूरी हो जाती है तब कोई भी उस आयुको नहीं बढ़ा सकता। न देवोंका इन्द्र किसीकी आयु बढ़ा सकता है न चक्रवर्ती बढ़ा सकता है और न मणि, औषधि वा मत्रोंके समूह आयुको बढ़ा सकते हैं।

संपडि जिणवरधम्मो लद्धोसि तुमं विसुद्धजोएण ।
खामसु जीवा सव्वे पत्तेसमये पयत्तेण ॥ १० ॥

सम्प्रति जिनवरधर्मो लब्धोऽसित्वं विशुद्धयोगेन ।
क्षमस्व जीवान् सर्वान् प्रत्येकसमये प्रयत्नेन ॥

अर्थ-इस समय योगोंकी वा मन वचन कायकी विशुद्धि होनेसे तुम्हें इस जैनधर्मकी प्राप्ति हुई है इसलिये बड़े प्रयत्नके साथ प्रत्येक समय में तू समस्त जीवोंको क्षमा कर। उनपर क्षमा धारण कर।

तिण्णिसया तेसट्ठि मिच्छत्ता दंमणस्स पडिवक्खा ।
अण्णाणे सद्दहिया मिच्छा मे दुक्कडं हुज्ज ॥ ११ ॥

त्रीणि शतानि त्रिषष्टिमिथ्यात्वानि दर्शनस्य प्रतिपक्षाणि ।
अज्ञानेन श्रद्धितानि मिथ्या मे दुष्कृतं भवतु ॥

अर्थ-सम्यग्दर्शनके प्रतिपक्षी वा विरोधी मिथ्यात्वके तीन सौ तिरेसठ भेद हैं। यदि उनका मैंने अपने अज्ञानसे श्रद्धान किया हो तो वे सब मेरे पाप मिथ्या हों।

महुमज्जमसजूआपभिदीवसणाइ सत्तभेयाइं।
णियमो ण कथं च तेसिं मिच्छा मे दुक्कड हुज्ज ॥ १२ ॥

मधुमांसमद्यद्यूतप्रभृतीनि व्यसनानि सप्त भेदानि।
नियमो न कृतः च तेषा मिथ्या मे दुष्कृतं भवतु ॥

अर्थ—मधु, मास, मद्य और जूआ आदिको लेकर जो व्यसनोंके सात भेद हैं उनको त्याग करनेका यदि मैने नियम न किया हो तो वह सब मेरा पाप मिथ्या हो।

अणुवयमहव्वया जे जमणियमासीलसाहुगुरुदिण्णा।
जे जे विराहिदा खलु मिच्छा मे दुक्कडं हुज्ज ॥ १३ ॥

अणुव्रतमहाव्रतानि यानि यमनियमशीलानि साधुगुरुदत्तानि।
यानि यानि विराधितानि खलु मिथ्या मे दुष्कृतं भवतु ॥ १३ ॥

अर्थ—साधुओंने वा गुरुओंने मुझे जो अणुव्रत दिये हों और उनमेंसे जिन जिनकी विराधना हुई हो वह सब मेरा पाप मिथ्या हो।

णिच्चिदरधादुसत्तय तरुदसवियलिंदिएसु छच्चेव।
सुरणरयतिरियचउरो चउदस मणुए सदसहस्सा ॥ १४ ॥
एदे सव्वे जीवा चउरासीलक्खजोणिवसि पत्ता।
जे जे विराहिया खलु मिच्छा मे दुक्कडं हुज्ज ॥ १५ ॥

नित्येतरधातुसप्त तरुदश विकलेन्द्रियेषु षट् चैव।
सुरनारकतिर्यक्षु चत्वारः चतुर्दश मनुष्ये शतसहस्राणि ॥१४॥
एते सर्वे जीवाश्चतुरशीतिलक्षयोनिवशे प्राप्ताः।
ये ये विराधिता खलु मिथ्या मे दुष्कृतं भवतु ॥ १५ ॥

अर्थ—नित्य निगोदकी सातलाख, इतर निगोदकी सातलाख, पृथिवी कायिककी सातलाख, जल कायिककी सातलाख अग्निकायिककी सातलाख वायुकायिककी सातलाख, दो इन्द्रियकी दो लाख, ते इन्द्रियकी दो लाख, चौइन्द्रिय की दो लाख, देवोंकी चार लाख, नारकियोंकी चार लाख, पचेंन्द्रिय तिर्यंच की चार लाख और मनुष्योंकी दश लाख। इस प्रकार समस्त जीवोंकी चौरासी लाख योनियोंमें प्राप्त हुए जीवोंमेंसे जिन जिन जीवोंकी विराधना मुझसे हुई हो वह सब मेरा पाप मिथ्या हो।

पुढवीजलग्गिवाओ तेओवि वण'फई य वियलतया ।
जे जे विराहिया खलु मिच्छा मे दुक्कडं हुज्ज ॥ १६ ॥

पृथ्वीजलाग्निवायुतेजोवनस्पतयश्च विकलत्रया. ।
ये ये विराधिताः खलु मिथ्या मे दुष्कृत भवतु ॥ १६ ॥

अर्थ—पृथ्वीकायिक जीव, जलकायिक जीव, अग्निकायिक जीव, वायुकायिक जीव, वनस्पतिकायिक जीव और विकलत्रय जीवोंमें से जो जो मुझसे विराधे गये हों उनकी विराधना से होनेवाला सब पाप मेरा मिथ्या हों।

मल सत्तरा जिणुत्ता वयविसये जा विराहणा विविहा
सामइया खमइया खलु मिच्छा मे दुक्कड हुज्ज ॥ १७ ॥

मलसप्तति जिनोक्ता व्रतविषये वा विराधना विविधा ।
सामायिक क्षमादिका मिथ्या मे दुष्कृतं भवतु ॥ १७ ॥

अर्थ—भगवान् जिनेन्द्रदेवने व्रतोंके सत्तर अतीचार बतलाये हैं उनमें से जो जो अतिचार लगे हों वा व्रतोंमें अनेक प्रकार से विराधना हुई हों वा सामायिक और क्षमाभावोंकी विराधना हुई हो वे सब मेरे पाप मिथ्या हों।

फलफुल्लछल्लिवल्ली अणगल ण्हाणं च धोवणाईहिं ।
जे जे विराहिया खलु मिच्छा मे दुक्कडं हुज्ज ॥ १८ ॥

फलपुष्पत्वग्वल्ली अगालितस्नानं च प्रक्षालनादिभि ।
ये ये विराधिता खलु मिथ्या मे दुष्कृतं भवतु ॥ १८ ॥

अर्थ—फल, पुष्प, छाल, लता आदिको काममें लाने में जो जीवोंकी विराधना हुई हो, विना छने जलसे स्नान करनेमें जिन जीवोंकी विराधना हुई हो, वस्त्रादिकके धोनेमें जो जीवोंकी विराधना हुई हो उन सबसे होनेवाले मेरे पाप सब मिथ्या हों।

णो शीलं णेव खमा विणओ तवो ण संजमोवासा ।
ण कया ण भाविकया मिच्छा मे दुक्कड हुज्ज ॥ १९ ॥

न शील नैव क्षमा विनयस्तपो न संयमोपवासा. ।
न कृता न भाविनी कृता मिथ्या मे दुष्कृतं भवतु ॥ १९ ॥

अर्थ-मैंने जो शील पालन न किया हो, क्षमा, धारण न की हो, विनय न किया हो, तप न किया हो, संयम पालन न किया हो, उपवास न किया हो तथा न इनकी भावना की हो। वह समस्त मेरा पाप मिथ्या हो।

कंदफलमूलवीया सचित्तरयणीयभोयणाहारा।
अण्णाणे जे वि कया मिच्छा मे दुक्कड हुज्ज ॥ २० ॥

कन्दफलमूलवीजानि सचित्तरजनीभोजनाहाराः।
अज्ञानेन ये पि कृता मिथ्याऽमे दुष्कृतं भवतु ॥ २० ॥

अर्थ—यदि मैने अपने अज्ञानसे कंद, मूल, फल, वीज, खाये हो। अन्य सचित्त पदार्थोंका भक्षण किया हो वा रात्रिमें भोजन किया हो तो वे सब मेरे पाप मिथ्या हों।

णो पूया जिणचरणे ण पत्तदाणं न चेइयागमणं।
ण कया ण भाविय मये मिच्छा मे दुक्कडं हुज्ज ॥ २१ ॥

नो पूजा जिनचरणे न पात्रदानं नचेर्यागमनम्।
न कृता न भाविता मया मिथ्या मे दुष्कृतं भवतु ॥ २१ ॥

अर्थ—मैने भगवानके चरण कमलोंकी पूजा न की हो, पात्र दान न दिया हो, ईर्यासमिति पूर्वक गमन न किया हो, ये सब काम न किये हों, न इनकी भावना की हो तो वे सब मेरे पाप मिथ्या हों।

बंभारंभपरिग्गह सावज्जा वहु पमाददोसेण।
जीवा विराहिया खलु मिच्छा मे दुक्कडं हुज्ज ॥ २२ ॥

ब्रह्मारंभपरिग्रहसावद्यानि वहूनि प्रमाददोषेण।
जीवा विराधिताः खलु मिथ्या मे दुष्कृतं भवतु ॥ २२ ॥

अर्थ—मैने अपने प्रमाद जन्य दोषसे ब्रह्मचर्य, आरभ और परिग्रहमें बहुत से पाप किये हों तथा उनमें जीवोंकी विराधना हुई हो तो वे सब मेरे पाप मिथ्या हों।

सत्तरिसउखित्तभवा तीदाणागयसुवट्टमाणजिणा।
जे जे विराहिया खलु मिच्छा मे दुक्कड हुज्ज ॥ २३ ॥

सप्ततिशतक्षेत्रभावाः अतीतानागतवर्तमानजिना।
ये ये विराधिताः खलु मिथ्या मे दुष्कृतं भवतु ॥ २३ ॥

अर्थ—एकसौ सत्तर कर्मभूमियोंमें होनेवाले भूत भविष्यत् वर्तमानकाल सम्बन्धी तीर्थंकरोंकी जो विराधना की हो उनका अनादर किया हो तो वे सब मेरे पाप मिथ्या हों।

अरुहासिद्धाइरिया उवज्झाया साहु पञ्चपरमेण्ठी।
जे जे विराहिया खलु मिच्छा मे दुक्कडं हुज्ज ॥ २४ ॥

अर्हत्सिद्धाचार्या उपाध्यायाः साधवः पञ्चपरमेष्ठिनः।
ये ये विराधिताः खलु मिथ्या मे दुष्कृतं भवतु ॥ २४ ॥

अर्थ—भगवान् अरहंत परमेष्ठी, सिद्ध परमेष्ठी, आचार्य परमेष्ठी, उपाध्याय परमेष्ठी और साधु परमेष्ठीकी जो जो विराधनाकी हो इनकी आज्ञा भग की हो वा अनादर किया हो तो वे सब मेरे पाप मिथ्या हों।

जिणवयणधम्मचेइयजिणपडिमा किट्टिमाअकिट्टिमया।
जे जे विराहिया खलु मिच्छा मे दुक्कड हुज्ज ॥ २५ ॥

जिनवचनं धर्मः चैत्यं जिनप्रतिमा कृत्रिमा अकृत्रिमाः।
ये ये विराधिताः खलु मिथ्या मे दुष्कृतं भवतु ॥ २५ ॥

अर्थ—जिनवचन, जिनधर्म, जिन चैत्यालय और कृत्रिम अकृत्रिम जिन प्रतिमाओंकी जो विराधना की हो तो वे सब मेरे पाप मिथ्या हों।

दसणणाणचरित्ते दोसा अट्ठट्ठपञ्चभेयाइ।
जे जे विराहिया खलु मच्छा मे दुक्कड़ं हुज्ज ॥ २६ ॥

दर्शनज्ञानचारित्रे दोषा अष्टाष्टपञ्चभेदा।
ये ये विराधिताः खलु मिथ्या मे दुष्कृतं भवतु ॥ २६ ॥

अर्थ—सम्यग्दर्शनके आठ दोष हैं, सम्यग्ज्ञानके आठ दोष हैं और सम्यक् चारित्रके पाच दोष है इनमेंसे जो जो दोष मैने लगाये हों तो उनसे होनेवाले मेरे सब पाप मिथ्या हों।

मइसुइओहीमणपज्जय तहा केवलं च पचमयं।
जे जे विराहिया खलु मिच्छा मे दुक्कड हुज्ज ॥ २७ ॥

मतिः श्रुतं अवधिः मन पर्यय तथा केवल च पञ्चमकम्।
ये ये विराधिता. खलु मिथ्या मे दुष्कृत भवतु ॥ २७ ॥

अर्थ—मतिज्ञान, श्रुतज्ञान, अवधिज्ञान, मनः पर्ययज्ञान और केवलज्ञान इन पाचों ज्ञानोंमें से जिस किसी ज्ञानकी विराधना हुई हो तो वह मेरा पाप मिथ्या हो।

आयारादी अंगा पुव्वपइण्णा जिणेहिं पण्णत्ता।
जे जे विराहिया खलु मिच्छा मे दुक्कडम् हुज्ज ॥ २८ ॥

आचारांगादीनि अंगानि पूर्वप्रकीर्णकानि जिनैः प्रणीतानि ।
ये ये विराधिताः खलु मिथ्या मे दुष्कृतं भवतु ॥ २८ ॥

आचारांग आदि ग्यारह अंग और चौदह पूर्वोंका स्वरूप जो भगवान् जिनेन्द्रदेवने कहा है । उसमें जो कुछ मुझसे विराधना हुई हो तो वह सब मेरा पाप मिथ्या हो ।

पंच महव्वयजुत्ता अट्ठादससहस्ससीलकयसोहा ।
जे जे विराहिया खलु मिच्छा मे दुक्कडं हुज्ज ॥ २९ ॥

पञ्चमहाव्रतयुक्ता अष्टादशसहस्रशीलकृतशोभाः ।
ये ये विराधिताः खलु मिथ्या मे दुष्कृतं भवतु ॥ २९ ॥

अर्थ—जो पच महाव्रतोंसे सुशोभित हैं और अठारह हजार शीलोंसे जिनकी शोभा बढ़ रही है ऐसे भगवान् अरहंत देवकी जो कुछ विराधना हुई हो तो वह सब मेरा पाप मिथ्या हो ।

लोए पियरसमाणा रिद्धिपवण्णा महागणवइया ।
जे जे विराहिया खलु मिच्छा मे दुक्कड हुज्ज ॥ ३० ॥

लोके पितृसमाना ऋद्धिप्रपन्ना महागणपतयः ।
ये ये विराधिताः खलु मिथ्या मे दुष्कृतं भवतु ॥ ३० ॥

अर्थ—अनेक ऋद्धियोंको धारण करने वाले गणधरदेव इस ससारमें पिताके समान हैं क्योंकि वे सब ऋषियोंके गुरु हैं, उनकी जो कुछ मुझसे विराधना हुई हो तो वह सब मेरा पाप मिथ्या हो ।

णिग्गंथ अज्जियाओ सड्ढा सड्ढी य चउविहो संघो ।
जे जे विराहिया खलु मिच्छा मे दुक्कड हुज्ज ॥ ३१ ॥

निर्ग्रंथा आर्यिकाः श्रावकाः श्राविकाः च चतुर्विधः संघः ।
ये ये विराधिताः खलु मिथ्या मे दुष्कृत भवतु ॥ ३ ॥

अर्थ—निर्ग्रंथमुनि, अर्जिका, श्रावक श्राविका इन चार प्रकारके सघोंमें से जिस किसीकी विराधना हुई हो तो वह सब मेरा पाप मिथ्या हो ।

देवा सुरा मणुस्सा णेरइयातिरियजोणिगयजीवा ।
जे जे विराहिया खलु मिच्छा मे दुक्कड हुज्ज ॥ ३२ ॥

देवा असुरा मनुष्या नारका तिर्यग्योनिगत जीवाः ।
ये ये विराधिताः खलु मिथ्या मे दुष्कृतं भवतु ॥ ३२ ॥

अर्थ-वैमानिक देव, भवनवासी, व्यंतर ज्योतिषी देव, मनुष्य, नारकी, और तिर्यंच गतिमें रहनेवाले जीवोंकी जो विराधना हुई हो और उससे जो पाप हुये हो वे सब मिथ्या हों।

कोहो माणो माया लोहो एदेय रायदोसाइं।
अण्णाणे जे वि कया मिच्छा मे दुक्कडं हुज्ज ॥ ३३ ॥
क्रोधो मानो माया लोभ. एते रागद्वेषा'।
अज्ञानेन ये पि कृता मिथ्या मे दुष्कृतं भवतु ॥ ३३ ॥

अर्थ-मैने अपने अज्ञानसे जो क्रोध मान माया लोभ आदि राग द्वेष किये हों वे सब मेरे पाप मिथ्या हों।

परवत्थं परमहिला पमादजोएण अज्जियं पाव।
अण्णावि अकरणीया मिच्छा मे दुक्कडं हुज्ज ॥ ३४ ॥
परवस्त्रं परमहिला प्रमादयोगेनार्जितं पापम्।
अन्येपि अकरणीया मिथ्या मे दुष्कृतं भवतु ॥ ३४ ॥

अर्थ-परवस्त्र और परस्त्री आदिके वशसे प्रमाद योग पूर्वक जो पाप मैने किये हों अथवा और जो जो न करने योग्य कार्य किये हों वे सब मेरे पाप मिथ्या हों।

इक्को सहावसिद्धो सोह अप्पा वियप्पपरिमुक्को।
अण्णो ण मज्झ सरणं सरणं सो एक्क परमप्पा ॥ ३५ ॥
एक स्वभावसिद्धः स आत्मा विकल्पपरिमुक्तः।
अन्यो न मम शरणं शरण स एक परमात्मा ॥ ३५ ॥

अर्थ-जो आत्मा एक है स्वभावसे ही सिद्ध है और सब तरहके विकल्पों से रहित हैं ऐसे एक परमात्माकी ही मै शरण जाता हू ऐसे परमात्माके सिवाय अन्य कोई भी मेरे लिये शरण नहीं है।

अरस अरूव अगंधो अव्वाबाहो अणंतणाणमओ।
अण्णो ण मज्झ सरण सरण सो एक्क परमप्पा ॥ ३६ ॥
अरस अरूप अगंधः अव्याबाव अनन्तज्ञानमय.।
अन्यो न मम शरण शरणं स एक' परमात्मा ॥ ३६ ॥

अर्थ-जो परमात्मा रस रहित है, रूप रहित है, गध रहित है, सब तरहकी वाधाओंसे रहित है और अनन्तज्ञान स्वरूप है ऐसा एक परमात्मा ही मुझे

शरण है अन्य कोई भी मुझे शरण नहीं है।

णेयपमाणं णाणं समए इक्केण हुंति ससहावे।
अण्णो ण मज्झ सरण सरणं सो एक्क परमप्पा ॥ ३७ ॥

ज्ञेयप्रमाणं ज्ञानं समयेन एकेन भवति स्वस्वभावे।
अन्ये न मम शरणं शरणं स एक. परमात्मा ॥ ३७ ॥

अर्थ—परमात्माका वह अनतज्ञान यद्यपि अपने स्वभावमें ही स्थिर रहता है तथापि वह प्रत्येक समयमें समस्त ज्ञेय पदार्थोंको जानता रहता है। ऐसा वह परमात्मा ही मुझे शरण है परमात्माके सिवाय अन्य कोई भी मुझे शरण नहीं है।

एयाणेयवियप्पपसाहणे सयसहावसुद्धगई।
अण्णो ण मज्झ सरण सरणं सो एक्क परमप्पा ॥ ३८ ॥

एकानेकविकल्पप्रसाधने स्वकस्वभावशुद्धगति.।
अन्यो न मम शरण शरणं स एकः परमात्मा ॥ ३८ ॥

अर्थ—उस परमात्माको चाहे एक प्रकारसे सिद्ध किया जाय और चाहे अनेक प्रकारसे सिद्ध किया जाय वह सदा अपने ही स्वभावमें शुद्ध बुद्ध स्वरूप स्थित रहता है। ऐसा वह परमत्मा ही मुझे शरण है उसके सिवाय अन्य कोई भी मुझे शरण नहीं है।

देहपमाणो णिच्चो लोयपमाणो वि धम्मदो होदि।
अण्णो ण मज्झ सरणं सरणं सो एक्क परमप्पा ॥ ३९ ॥

देहप्रमाण नित्य' लोकप्रम. अपि धर्मतो भवति।
अन्यो न मम शरणं शरणं स एक परमात्मा ॥ ३९ ॥

अर्थ—वह परमात्मा नित्य है, शरीरके प्रमाणके बराबर है, और प्रदेशोंके द्वारा लोक प्रमाण है ऐसा वह परमात्मा ही मुझे शरण है उसके सिवाय अन्य कोई भी मुझे शरण नहीं है।

केवलदंसणणाणं समये इक्केण दुण्णिउवओगा।
अण्णो ण मज्झ सरणं सरणं सो एक्क परमप्पा ॥ ४० ॥

केवलदर्शनज्ञाने समयेनैकेन द्वौ उपयोगौ।
अन्यो न मम शरण शरणं स एक. परमात्मा ॥ ४० ॥

अर्थ—उन परमात्माके एकही समयमें केवलदर्शन और केवलज्ञान दोनों

ही उपयोग एकसाथ होते हैं। वह परमात्मा ही मुझे शरण है। अन्य कोई शरण नहीं है।

सगरूव सहजसिद्धो विहावगुणमुक्ककम्मवावारो।
अण्णो ण मज्झ सरणं सरणं सो एक्क परमप्पा ॥ ४१ ॥

स्वकरूप सहजसिद्धो विभावगुणमुक्त कर्म व्यापारः।
अन्यो न मम शरणं शरणं स एकः परमात्मा ॥ ४१ ॥

अर्थ—वह परमात्मा अपने स्वभाविक स्वरूपमें ही लीन रहते हैं, स्वाभाविक स्वभावसे ही सिद्ध है और रागद्वेषादिक वैभाविक गुणोंसे रहित होनेके कारण समस्त कर्मोंके व्यापारसे रहित हैं। ऐसे वे परमात्माही मुझे शरण है। उनके सिवाय अन्य कोई भी मुझे शरण नहीं है।

सुण्णो णेय असुण्णो णोकम्मो कम्मवज्जिओ णाणं।
अण्णो ण मज्झ सरण सरण सो एक्क परमप्पा ॥ ४२ ॥

शून्यो नैवाशून्यो नोकर्मकर्मवर्जितो ज्ञानम्।
अन्यो न मम शरणं शरणं स एकः परमात्मा ॥ ४२ ॥

अर्थ-वह परमात्मा रूप, रस, गंध, स्पर्श रहित होनेके कारण शून्यरूप है तथा ज्ञानमय आत्मास्वरूप होनेके कारण शून्यरूप नहीं भी है। उस परमात्माका ज्ञान नोकर्मोंसे भी रहित हैं और ज्ञानावरणादिक कर्मोंसे भी रहित है। ऐसा वह परमात्मा मुझे शरण है, उसके सिवाय मुझे और कोई शरण नहीं है।

णाणाउ जो ण भिण्णो वियप्पभिण्णो सहावसुक्खमओ।
अण्णो ण मज्झ सरणं सरणं सो एक्क परमप्पा ॥ ४३ ॥

ज्ञानतो यो न भिन्न विकल्पभिन्नः स्वभावसुखमयः।
अन्यो न मम शरणं शरणं स एकः परमात्मा ॥ ४३ ॥

अर्थ—जो परमात्मा अपने केवलज्ञानसे कभी भिन्न नहीं होता, परंतु सब तरहके विकल्पोंसे वह सदा भिन्न रहता है, स्वाभाविक सुखस्वरूप है ऐसा परमात्मा ही मुझे शरण है ऐसे परमात्माके सिवाय अन्य कोई शरण नहीं है।

अच्छिण्णोवच्छिण्णो पमेय रूवत्त गुरुलहू चेव।
अण्णो ण मज्झ सरणं सरणं सो एक्क परमप्पा ॥ ४४ ॥

अच्छिन्नोवच्छिन्न प्रमेयरूपत्व अगुरुलघुत्वं चैव।
अन्यो न मम शरणं शरणं स एकः परमात्मा ॥ ४४ ॥

अर्थ—जो कभी किसी प्रकार छिन्न भिन्न नहीं होता, जो अखण्ड स्वरूप है तथा अवच्छिन्न है, अंतिम शरीरके प्रमाणके समान है अथवा असंख्यात प्रदेशमय है। जो ज्ञानके द्वारा समस्त पदार्थोंके समान है अर्थात् समस्त पदार्थों का ज्ञाता है और अगुरु लघु गुणसे सुशोभित है ऐसा परमात्मा ही मुझे शरण है। उसके सिवाय अन्य कोई भी शरण नहीं है।

सुहअसुहभावविगओ सुद्धसहावेण तम्मयं पत्तो।
अण्णो ण मज्झ सरणं सरणं सो एक्क परमप्पा ॥ ४५ ॥

शुभाशुभभावविगतः शुद्धस्वभावेन तन्मयं प्राप्तः।
अन्यो न मम शरणं शरणं स एकः परमात्मा ॥ ४५ ॥

अर्थ—जो शुभभाव और अशुभ भाव दोनोंसे रहित है। जो केवल शुद्ध-स्वभावके द्वारा अपने ही आत्मामें तल्लीन है। अथवा जो केवल अपने शुद्ध-स्वभावमें ही लीन है ऐसा ही परमात्मा मुझे शरण है। इसके सिवाय अन्य कोई भी मुझे शरण नहीं है।

णो इत्थी ण णउंसो णो पुंसो णेव पुण्णपावमओ।
अण्णो ण मज्झ सरणं सरणं सो एक्क परमप्पा ॥ ४६ ॥

न स्त्री न नपुंसकः न पुमान् नैव पुण्यपापमयः।
अन्यो न मम शरणं शरणं सः एकः परमात्मा ॥ ४६ ॥

अर्थ—जो न स्त्री है, न नपुंसक है, न पुरुष है और न पुण्यपाप रूप है, ऐसा परमात्मा ही मुझे शरण है। उसके सिवाय अन्य कोई भी शरण नहीं है।

ते को ण होदि सुयणो त कस्स ण बंधवो ण सुयणो वा।
अप्पा हवेह अप्पा एगागी जाणगो सुद्धो ॥ ४७ ॥

तव को न भवति स्वजनः त्वं कस्य न बंधुः स्वजनो वा।
आत्मा भवेत् आत्मा एकाकी ज्ञायकः शुद्धः ॥ ४७ ॥

अर्थ—हे आत्मन्! इस संसारमें तेरा कोई कुटुम्बी नहीं है तथा तू भी किसी का भाई वा कुटुम्बी नहीं है। यह आत्मा सदा आत्मा ही रहता है अकेला ही रहता है, समस्त पदार्थोंका जानना इसका स्वभाव है और यह सदा शुद्ध है।

जिणदेवो होउ सया मई सु जिणसासणे सया होऊ।
सण्णासेण य मरणं भवे भवे मज्झ संपदओ ॥ ४८ ॥

जिनदेवो भवतु सदा मतिः सुजिनशासने सदा भवतु।
सन्यासेन च मरणं भवे भवे मम सम्पत् ॥ ४८ ॥

अर्थ—मै जिनदेवकी ही सदा सेवा करता रहूं जिन देवके सिवाय अन्य किसीको देव न मानूं। मेरी बुद्धि सदा जिनशासनमें वा धर्ममें ही बनी रहे। जैन धर्मको छोड़ कर अन्य किसी धर्ममें मेरी बुद्धि न जाय। मेरा मरण सदा समाधि पूर्वक ही हो समाधि मरणके सिवाय अन्य मरण न हो। यह सम्पत्ति मुझे भव भवमें प्राप्त हो।

जिणो देवो जिणो देवो जिणो देवो जिणो जिणो।
दयाधम्मो दयाधम्मो दयाधम्मो दया सया ॥ ४६ ॥
जिनो देवो जिनो देवो जिनो देवो जिनो जिनः।
दयाधर्मो दयाधर्मो दयाधर्मो दया सदा ॥ ४६ ॥

अर्थ—इस ससारमें देव जिन ही हैं, देव जिन ही हैं देव जिन ही हैं भगवान् जिनेन्द्रदेव अरहंत देव ही देव हैं अन्य कोई देव देव नहीं है। धर्म दयारूप ही है, धर्म दयामय ही है, धर्म दया ही है। धर्म सदा दयामय ही होता है दया के सिवाय अन्य कोई धर्म हो ही नहीं सकता।

महासाहू महासाहू महासाहू दिगंवरा।
एवं तच्च सदा हुज्ज जाव णो मुत्तिसंगमो ॥ ५० ॥
महा साधवः महा साधवः महासाधवो दिगंवरा।
एवं तत्त्वं सदा भवतु यावन्न मुक्तिसंगम ॥ ५० ॥

अर्थ—महासाधु दिगम्बर ही होते हैं महासाधु दिगम्बर ही होते हैं महासाधु दिगम्बर ही होते हैं। हे प्रभो! जबतक मुझे मोक्षकी प्राप्ति न हो तवतक मेरे हृदयमें यही तत्त्व सदा बना रहे।

*भावार्थ*—तबतक मै दया मय धर्मको मानता रहूं जिनेन्द्रदेवको देव मानता रहूं और निर्ग्रंथ मुनियोंको साधु वा गुरु मानता रहूं।

एवमेव गओकालो अणंतो दुक्खसंगमे।
जिणोवदिट्ठमण्णासे ण यत्तारोहणा कया ॥ ५१ ॥
एवमेव गतः कालः अनन्तो दुःखसंगमे।
जिनोपदिष्टसन्यासे न यत्तारोहणा कृता ॥ ५१ ॥

अर्थ—आजतक मेरा अनंत काल दुःख भोगते ही व्यर्थ वीत गया। मैने

अबतक भगवान् जिनेन्द्र देवके कहे हुए समाधि मरणके लिए यत्न पूर्वक कभी प्रयत्न नहीं किया।

भावार्थ—समाधि मरण कभी धारण नहीं किया।

संपइ एव संपत्ताराहणा जिणदेसिया।
किं किं ण जायदे मज्झ सिद्धिसंदोहसंपई ॥ ५२ ॥

सम्प्रति एव सम्प्राप्ता आराधना जिनदेशिता।
का का न जायते मम सिद्धिसंदोहसम्पत्तिः ॥ ५२ ॥

अर्थ—अब इस समय मुझे भगवान् जिनेन्द्र देवकी कही हुई आराधना प्राप्त हुई हैं इनके प्राप्त होने से अब इस संसारमें ऐसी कौनसी सिद्धियोंकी समूह रूप संपत्ति है जो मुझे प्राप्त न हो।

भावार्थ—अब इन आराधनाओंके पालन करनेसे मुझे समस्त सिद्धिया प्राप्त हो जायेंगी।

अहो धम्ममहो धम्मं अहो मे लद्धि णिम्मला।
संजादा संपया सारा जेण सुक्खमणूपमं ॥ ५३ ॥

अहो धर्मः अहो धर्मः अहो मे लब्धिनिर्मला।
संजाता सम्पत् सारा येन सुखं अनुपमम् ॥ ५३ ॥

अर्थ—यह जिनदेवका कहा हुआ दयाधर्म बड़ा ही आश्चर्य कारक है तथा यह धर्म सबसे उत्तम है और यह मुझे प्राप्त हुई अत्यत निर्मल काल लब्धिभी अत्यत आश्चर्य उत्पन्न करनेवाली है। इस निर्मल काललब्धि और जिनधर्म के प्रसादसे मुझे आराधनारूप सर्वोत्तम संपत्ति प्राप्त हुई है इस आराधना रूप संपत्तिसे ही उपमा रहित मोक्ष सुख प्राप्त होता है।

एव आराहंतो आलोयणवंदनापडिक्कमणं।
पावइ फलंय तेसिं णिद्दिट्ठं अजियबम्मेण ॥ ५४ ॥

एवं आराधयन् आलोचनावंदनाप्रतिक्रमणानि।
प्राप्नोति फलं च तेषां निर्दिष्टमजितब्रह्मणा ॥ ५४ ॥

अर्थ—इस प्रकार आलोचना वंदना और प्रतिक्रमणकी आराधना करनेसे भगवान् जिनेन्द्र देवका कहा हुआ मोक्ष फल प्राप्त होता है।

---

# अथ चतुर्दिशि वंदना।

प्राग्दिग्विदिगन्तरि, केवलिजिनसिद्ध साधुगणदेवाः। ये सर्वर्द्धिसमृद्धा, योगिगणास्तानऽहं वन्दे ॥ १ ॥ दक्षिणदिग्विदिगन्तरि, केवलिजिनसिद्धसाधुगणदेवाः। ये सर्वर्द्धिसमृद्धा० ॥ २ ॥ पश्चिमदिग्विदिगन्तरि केवलिजिनसिद्धसाधुगणदेवाः। ये सर्वर्द्धिसमृद्धा० ॥ ३ ॥ उत्तरदिग्विदिगन्तरि, केवलिजिनसिद्धसाधुगणदेवाः। ये सर्वर्द्धिसमृद्धा० ॥ ४ ॥

इति चतुर्दिशि वंदना।

---

# सर्वदोषप्रायश्चित्तविधिर्लिख्यते।

ॐ ह्रीं अर्हं अ सि आ उ सा त्रयस्त्रिंशदत्यासादनात्यागानुष्ठितप्रोषधोद्योतनाय नमः ॥ १ ॥ ॐ ह्रीं अर्हं अहिंसामहाव्रतस्यात्यासादनात्यागायानुष्ठितप्रोषधोद्योतनाय नमः ॥ २ ॥ ॐ ह्रीं अर्हं सत्यमहाव्रतस्यात्यासादनात्यागायानुष्ठितप्रोषधोद्योतनाय नमः ॥ ३ ॥ ॐ ह्रीं अर्हं अचौर्यमहाव्रतस्यात्यासादनात्यागायानुष्ठितप्रोषधोद्योतनाय नमः ॥ ४ ॥ ॐ ह्रीं अर्हं ब्रह्मचर्यमहाव्रतस्यात्यासादनात्यागायानुष्ठितप्रोषधोद्योतनाय नमः ॥ ५ ॥ ॐ ह्रीं अर्हं अपरिग्रहमहाव्रतस्यात्यासादनात्यागायानुष्ठितप्रोषधोद्योतनाय नमः ॥ ६ ॥ ॐ ह्रीं अर्हं ईर्यासमितेरत्यासादनात्यागायानुष्ठितप्रोषधोद्योतनाय नमः ॥ ७ ॥ ॐ ह्रीं अर्हं भाषासमिरेत्यासादनात्यागायानुष्ठितप्रोषधोद्योतनाय नमः ॥ ८ ॥ ॐ ह्रीं अर्हं एषणासमिरेत्यासादनात्यागायानुष्ठितप्रोषधोद्योतनाय नमः ॥ ९ ॥ ॐ ह्रीं अर्हं आदाननिक्षेपणसमिरेत्यासादनात्यागायानुष्ठितप्रोसधोद्योतनाय नमः ॥ १० ॥ ॐ ह्रीं अर्हं उत्सर्गसमिरेत्यासादनात्यागायानुष्ठितप्रोषधोद्योतनाय नमः ॥ ११ ॥ ॐ ह्रीं अर्हं मनोगुप्तरेत्यासादनात्यागायानुष्ठितप्रोषधोद्योतनाय नमः ॥ १२ ॥ ॐ ह्रीं अर्हं वचोगुप्तेरत्यासादनात्यागायानुष्ठितप्रोषधोद्योतनाय नमः ॥ १३ ॥ ॐ ह्रीं अर्हं कायगुप्तेरत्यासादनात्यागायानुष्ठि-

तप्रोपधोद्योतनाय नमः ॥ १४ ॥ ॐ ह्रीं अर्हं जीवास्तिकायिकस्यात्यासादनात्यागायानुष्ठितप्रोपधोद्योतनाय नमः ॥ १५ ॥ ॐ ह्रीं अर्हं पुद्गलास्तिकायिकस्यात्यासादनात्यागायानुष्ठितप्रोषधोद्योतनाय नमः ॥ १६ ॥ ॐ ह्रीं अर्हं धर्मास्तिकायिकस्यात्यासादनात्यागायानुष्ठितप्रोपधे द्योतनाय नमः ॥ १७ ॥ ॐ ह्रीं अर्हं अधर्मास्तिकायिकस्यात्यासादनात्यागायानुष्ठितप्रोपधोद्योतनाय नमः ॥ १८ ॥ ॐ ह्रीं अर्हं आकाशास्तिकायिकस्यात्यासादनात्यागायानुष्ठितप्रोषधोद्योतनाय नमः ॥ १९ ॥ ॐ ह्रीं अर्हं पृथ्वीकायिकस्यात्यासादनात्यागायानुष्ठितप्रोषधोद्योतनाय नमः ॥ २० ॥ ॐ ह्रीं अर्हं अप्कायिकस्यात्यासादनात्यागायानुष्ठितप्रोपधोद्योतनाय नमः ॥ २१ ॥ ॐ ह्रीं अर्हं तेजः कायिकस्यात्यासादनात्यागायानु ष्ठितप्रोपधोद्योतनाय नमः ॥ २२ ॥ ॐ ह्रीं अर्हं वायुकायिकस्यात्यासादनात्यागायानुष्ठितप्रोपधोद्योतनाय नमः ॥ २३ ॥ ॐ ह्रीं अर्हं वनस्पतिकायिकस्यात्यासादनात्यागायानुष्ठितप्रोपधोद्योतनाय नमः ॥ २४ ॥ ॐ ह्रीं अर्हं त्रसकायिकस्यात्यासादनात्यागायानुष्ठितप्रोपधोद्योतनाय नमः ॥ २५ ॥ ॐ ह्रीं अर्हं जीवपदार्थस्यात्यासादनात्यागायानुष्ठितप्रोपधोद्योतनाय नमः ॥ २६ ॥ ॐ ह्रीं अर्हं अजीवपदार्थस्यात्यासादनात्यागायानुष्ठितप्रोपधोद्योतनाय नमः ॥ २७ ॥ ॐ ह्रीं अर्हं आस्रवपदार्थस्यात्यासादनात्यागायानुष्ठितप्रोपधोद्योतनाय नमः ॥ २८ ॥ ॐ ह्रीं अर्हं बंधपदार्थस्यात्यासादनात्यागायानुष्ठितप्रोपधोद्योतनाय नमः ॥ २९ ॥ ॐ ह्रीं अर्हं संवरपदार्थस्यात्यासादनात्यागायानुष्ठितप्रोपधोद्योतनाय नमः ॥ ३० ॥ ॐ ह्रीं अर्हं निर्जरापदार्थस्यात्यासादनात्यागायानुष्ठितप्रोपधोद्योतनाय नमः ॥ ३१ ॥ ॐ ह्रीं अर्हं मोक्षपदार्थस्यात्यासादनात्यागायानुष्ठितप्रोपधोद्योतनाय नमः ॥ ३२ ॥ ॐ ह्रीं अर्हं पुण्यपदार्थस्यात्यासादनात्यागायानुष्ठितप्रोपधोद्योतनाय नमः ॥ ३३ ॥ ॐ ह्रीं अर्हं पापपदार्थस्यात्यासादनात्यागायानुष्ठितप्रोपधोद्योतनाय नमः ॥ ३४ ॥ ॐ ह्रीं अर्हं सम्यग्ज्ञानाय नमः ॥३५॥ ॐ ह्रीं अर्हं सम्यग्दर्शनाय नमः ॥ ३६ ॥ ॐ ह्रीं अर्हं सम्यक्चारित्राय नमः ॥ ३७ ॥

इति सर्वदोषप्रायश्चित्तविधि ।

# अथ सामायिक पाठः।

सिद्धवस्तुवचो भक्त्या, सिद्धान् प्रणमतः सदा। सिद्धकार्याः शिवं प्राप्ताः, सिद्धिं ददतु नोऽव्ययाम् ॥ १ ॥ नमोस्तु धौतपापेभ्यः, सिद्धेभ्यः ऋषिसंसदि। सामायिकं प्रपद्येऽहं, भवभ्रमणसूदनम् ॥ २ ॥ साम्यं मे सर्वभूतेषु, वैरं मम न केनचित्। आशां सर्वां परित्यज्य, समाधिमहमाश्रये ॥ ३ ॥ रागद्वेषान्ममत्वाद्वा, हा मया ये विराधिताः। क्षमन्तु जंतवस्ते मां, क्षाम्यन्तु सदा तेभ्यः क्षमाम्यहं ॥ ४ ॥ मनसा वपुषा वाचा, कृतकारितसम्मतैः। रत्नत्रयभवं दोषं, गर्हे निन्दामि वर्जये ॥ ५ ॥ तैरश्चं मानवं दैवमुपसर्गं सहेऽधुना। कायाहारकषायादीन्, संत्यजामि त्रिशुद्धितः ॥ ६ ॥ रागद्वेषं भय शोकं, प्रहर्षौत्सुक्यदीनताः। व्युत्सृजामि त्रिधा सर्वमरतिं रतिमेव च ॥ ७ ॥ जीवने मरणे लाभेऽलाभे, योगे विपर्यये। बन्धावरौ सुखे दुःखे, सर्वदा समता मम ॥ ८ ॥ आत्मैव मे सदा ज्ञाने, दर्शने चरणे तथा। प्रत्याख्याने ममात्मैव, तथा संवरयोगयोः ॥ ९ ॥ एको मे शाश्वतश्चात्मा, ज्ञानदर्शनलक्षणः। शेषा बहिर्भवा भावाः, सर्वे संयोगलक्षणाः ॥ १० ॥ संयोगमूला जीवेन, प्राप्ता दुःखपरम्परा ॥ तस्मात्संयोगसम्बन्ध, त्रिधा सर्वं त्यजाम्यहम् ॥ ११ ॥ एवं सामायिकात्सम्यक्, सामायिकमखंडितम्। वर्तते मुक्तिमानिन्या, वशीभूताय ते नमः ॥ १२ ॥

इति सामायिक पाठः।

---

# आचार्यशान्तिसागरस्तुतिः।

पूज्यातिपूज्यैर्यतिभिस्सुवन्द्यं संसारगम्भीरसमुद्रसेतुम्। ध्यानैकनिष्ठागरिमागरिष्ठं, आचार्यवर्यं प्रणमामि नित्यम् ॥ १ ॥ ध्यानादिसैन्य परि-

वर्ध्यं पूर्णं, कर्मारिवर्गं प्रणिहत्य वेगात् । नीरागस्वातंत्र्यपदे प्रतिष्ठ, आ०
॥ २ ॥ यो मुख्यसूरिर्मुनिनायकानां, आचारपारं गतवान्समग्रं । ध्यान-
प्रभावेण प्रवृद्धदीप्तिः, आ० ॥ ३ ॥ दुर्जेयकं द्वादशधा कषायं, जित्वा
निजात्मानुभवैकशुद्ध्या । षष्ठे गुणे सप्तमके गतं तं, आ० ॥ ४ ॥ आभ्य-
न्तरो बाह्य उपाधिभारः, दूरीकृतो येन वितृष्णभावात् । दैगम्बरं सुन्दर-
दिव्यकायं, आ० ॥ ५ ॥ धर्मामृतं पाययति प्रभूत, यो भव्यजीवान्
करुणास्वरूपः । स्वात्मस्वरूपं च चकार तेभ्यः आ० ॥ ६ ॥ योऽनेक-
साधून् विषयेष्वरक्तान्, निर्ग्रंथलिंगे विधिना चकार । गुरूपरागोपि च
वीतरागः, आ० ॥ ७ ॥ महागमीरंविशदीकृतार्थं, शास्त्राब्धिपारे गत-
वान् समग्रम् । तथापि प्रज्ञामदताविरक्तः, आ० ॥ ८ ॥ यथा कुन्दकुन्दः
सुरैर्वंद्यपादः, अभूत्साधुसंसेव्यमानप्रपादः । तथैवाधुना लोकपूज्य यती-
न्द्रं भजे सूरिवर्यं सदा साधुवंद्यम् ॥ ९ ॥ यथा दुष्टजीवेन घोरोपसर्गाः
कृताः पार्श्वनाथे त्रिलोकैकपूज्ये । तथा दुष्टलोकोपसर्गं सहिष्णुं भजे०
॥ १० ॥ यतीनामनेके यथा शिष्यवर्गाः, प्रभोः कुन्दकुन्दस्य सूरेरभूवन् ।
तथैवाधुना साधुसंदोहशिष्यम्, भजे० ॥ ११ ॥ यथा सूत्रचिन्हं हि रत्न-
त्रयस्य, पुरा भारते पूर्वसूर्यैर्निरुक्तम् । तथैवाधुना सूत्रचिन्हं दधान,
भजे० ॥ १२ ॥ शान्तेरगारं विनष्टारिमारं जगत्कञ्जमित्रं गुणाढ्यं पवि-
त्रम् । वरिष्ठैः सुपूज्य गरिष्ठप्रधानं, भजे० ॥ १३ ॥ गुरुर्भीमगौडा महा-
शक्तिशाली, स्वामाता सती सत्यरूपा सुरूपा । तयोः पुत्ररत्न जिताचा-
र्यरत्नं, भजे० ॥ १४ ॥ जगद्वल्लर्गीं कर्तयित्वा कृपाणीं, गृहीत्वा शुभ-
ध्यानरूपा स्वभावाम् । प्रपेदे गुणं सप्तमञ्चैकहीनं, भजे० ॥ १५ ॥
गुणागामनीरं भवाम्भोधितीरं, सदा निर्विकारं गृहीतात्मसारम् । कषायादि-
दुर्दण्डभेदं भजे० ॥ १६ ॥ महद्ध्याननिष्ठं महत्सु प्रकृष्ट, महर्षिप्रतिष्ठं
वचा यस्य मिष्टम् । चिदानंदरूपे स्वरूपे प्रविष्टं, भजे० ॥ १७ ॥ निर्ग्रंथ-
साधुमधुपव्रजराजमाना, त्वत्पादपद्मकलिका धवलाभिरामा । नक्षत्रवृन्द-
परिवेष्टितचन्द्रविम्बः, देवैः सुदृष्टिशुचिभिर्मघवा यथा वा ॥ १८ ॥
यत्पादसेवनरताः खलु भव्यलोकाः, संसारतो झटिति यांति विरक्तिबु-

द्धिम् ॥ यद्गीः प्रशस्यमहनीयसुहेतुपूता, पश्चाननस्य समतां सदसि व्यनक्ति ॥ १९ ॥ मिथ्यान्धकारपटलं प्रविहाय शीघ्रं, तत्त्वप्रसारकिरणैः सुखदैः समन्तात् । श्रद्धापरायणजनाम्बुजकोरकांश्च, सन्तोषयन् विगततापरविस्त्वमेव ॥ २० ॥ मिथ्यान्धकारपरिमर्दनरश्मिजालं, ज्ञानप्रकाशितजगत्प्रविकाशिसूर्यम् । ध्यानैकताननियतं मुनिराजसेव्यं, आचार्यवर्यगुरुपादमहं नमामि ॥ २१ ॥ गुणास्त्वदीयाः धवलाः गभीराः, सुरेन्द्रनागेन्द्रनरेन्द्रपूज्याः । विभाति सूरे ! तव दिव्यदेहे, ततोसि पूज्यः खलु विश्वलोके ॥ २२ ॥ दर्शं दर्शं सूरिशांतस्वरूपं पायं पायं वाक्यपीयूषधाराम् । स्मारं स्मारं तद्गुणान् स्पृष्टपादाः, जाताः शान्ताः साधवोऽक्षेष्वरक्ताः ॥२३॥ चित्ते चित्ते शान्तमूर्तेः सुबोधः, बोधे तत्स्वरूपानुरूपम् । रूपे रूपे स्वात्मवृत्तौ प्रवृत्ति वृत्तौ वृत्तौ कुन्थुनेमीन्दुवीराः ॥ २४ ॥ आसीद्यः खलु दक्षिणायनकरः पश्चादुदीच्यां गतः । ज्ञानध्यानतपःप्रभामयवपुः संधारयन् दीप्तिमान् ॥ सम्यग्ज्ञानमरीचिभिर्विकसिता आशाश्च येनाखिलाः । सोऽय सूरिरपूर्वभानुरुदितो लोके सदा शांतिदः ॥ २५ ॥ सुखदयाखिलबोधविधानया, विधिविशाखिकठोरकुठारया । विगतरागगुरुर्जिनदीक्षया, तरति तारयति भ्रमजालतः ॥ २६ ॥

इति आचार्यशान्तिसागरस्तुतिः ।

---

# दैवसिकरात्रिकप्रतिक्रमणम् ।

जीवे प्रमादजनिताः प्रचुराः प्रदोषा, यस्मात्प्रतिक्रमणतः प्रलयं प्रयान्ति । तस्मात्तदर्थममलं मुनिबोधनार्थं, वक्ष्ये विचित्रभवकर्मविशोधनार्थम् ॥ १ ॥ पापिष्ठेन दुरात्मना जडधिया मायाविना लोभिना । रागद्वेषमलीमसेन मनसा दुष्कर्म यन्निर्मितम् ॥ त्रैलोक्याधिपते जिनेन्द्र ! भवतः श्रीपादमूलेऽधुना । निन्दापूर्वमहं जहामि सततं वर्वर्तिषुः सत्पथे ॥ २ ॥ खम्मामि सव्वजीवाणं सव्वे जीवा खमतु मे । मित्ती मे सव्वभूदेसु वेरं

मज्झं ण केण वि ॥ ३ ॥ रागबंधपदोसं च हरिसं दीणभावयं। उस्सुगत्तं भयं सोगं रदिमरदिं च वोस्सरे ॥ ४ ॥ हा! दुट्ठकयं हा! दुट्ठचिंतियं भासियं च हा दुट्ठ। अंतोअंतो डज्झमि पच्छुत्तावेण वेदंतो ॥ ५ ॥ दव्वे खेत्ते काले भावे य कदावराहसोहणयं। णिंदणगरहणजुत्तो मणवचकाएण पडिक्कमणं ॥ ६ ॥ एकेन्द्रिया द्वीन्द्रियास्त्रीन्द्रियाश्चतुरिन्द्रियाः पञ्चेन्द्रियाः पृथ्वीकायिका अप्कायिकास्तेजःकायिका वायुकायिका वनस्पतिकायिकास्त्रसकायिकाः, एतेषां उत्तापनं, परितापनं, विराधनं, उपघातः कृतो वा कारितो वा क्रियमाणो वा समनुमतस्तस्य मिथ्या मे दुष्कृतम्। व्रतसमितीन्द्रियरोधा लोच आवश्यकमचेलमस्नानं। क्षितिशयनमदन्तधावनं स्थितिभोजनमेकभक्तश्च ॥ १ ॥ एते खलु मूलगुणाः श्रमणानां जिनवरैः प्रज्ञप्ताः। अत्र प्रमादकृतादतिचारान्निवृत्तोऽहम् ॥२॥ छेदोपस्थापनं भवतु मम।

पञ्चमहाव्रतपञ्चसमितिपञ्चेन्द्रियरोधलोचषडावश्यक क्रियाः, अष्टाविंशतिमूलगुणाः, उत्तमक्षमामार्दवार्जवशौचसत्यसंयमतपस्त्यागाकिञ्चन्यब्रह्मचर्याणि दशलाक्षणिको धर्मः, अष्टादशशीलसहस्राणि, चतुरशीतिलक्षगुणाः, त्रयोदशविधं चारित्रं, द्वादशविधं तपश्चेति सकलं सम्पूर्णमर्हत्सिद्धाचार्योपाध्यायसर्वसाधुसाक्षिक सम्यक्त्वपूर्वक दृढव्रतं सुव्रतं समारूढ ( ते ? ) मे भवतु।

"अथ सर्वातिचारविशुद्ध्यर्थं दैवसिकप्रतिक्रमणक्रियायां कृतदोषनिराकरणार्थं पूर्वाचार्यानुक्रमेण सकलकर्मक्षयार्थं भावपूजावन्दनास्तवसमेतं आलोचनासिद्धभक्तिकायोत्सर्गं करोम्यहम्" इति प्रतिज्ञाप्य "णमो अरिहंताणं" इत्यादि सामायिकदण्डकं पठित्वा कायोत्सर्गं कुर्यात्। "थोस्सामि" इत्यादि चतुर्विंशतिस्तवं पठेत्। श्रीमते वर्धमानाय नमो नमितविद्विषे। यज्ज्ञानान्तर्गतं भूत्वा त्रैलोक्यं गोष्पदायते ॥ १ ॥ तवसिद्धे णयसिद्धे संजमसिद्धे चरित्तसिद्धे य। णाणम्मि दंसणम्मि य सिद्धे सिरसा णमंसामि ॥ २ ॥ इच्छामि भंते! सिद्धभत्तिकाओस्सग्गो कओ तस्सालोचेउ, सम्मणाणसम्मदंसणसम्मचरित्तजुत्ताणं, अट्ठविहकम्ममुक्काणं, अट्ठगुणसम्पण्णाणं, उड्ढ-

ढलोयमत्थयम्मि पइट्ठियाणं, तवसिद्धाणं, णयसिद्धाणं, संजमसिद्धाणं, चरित्त सिद्धाण अतीदाणागदवट्टमाणकालत्तयसिद्धाणं, सव्वसिद्धाणं, णिच्चकाल अंचेमि पूजेमि वंदामि णमंसामि दुक्खक्खओ कम्मक्खओ वोहिलाहो सुगइगमणं समाहिमरणं जिणगुणसंपत्ति होउ मज्झं ।

## आलोचना

इच्छामि भगवन् ! चारित्राचारस्त्रयोदशविधः परिविभावितः पञ्च-महाव्रतानि पञ्चसमितयः त्रिगुप्तयश्चेति । तत्र प्रथमे महाव्रते प्राणाति-पाताद्विरमणम् । तस्य पृथिवीकायिका जीवा असंख्यातासंख्याताः, अप्का-यिका जीवा असंख्यातासंख्याताः, तेजः कायिका जीवा असंख्यातासं-ख्याताः, वायुकायिका जीवा असंख्यातासंख्याताः, वनस्पतिकायिका जीवा अनन्ताः, हरिताः, वीजाः, अंकुराः छिन्नाः भिन्नाः, तेषामुत्तापन, परितापनं, विराधन, उपघातः कृतो वा कारितो वा क्रियमाणो वा समनु-मतः, तस्य मिच्छामे दुष्कृतम् ॥ १ ॥ द्वीन्द्रिया जीवा असंख्यातासं ख्याताः, कुक्षिक्रमिशङ्खक्षुल्लकवराटक अक्ष अरिष्टबालशम्बूकशुक्तिपृथि-वीकायिकाः, तेषामुत्तापन, परितापन, विराधन, उपघातः कृतो वा कारितो वा क्रियमाणो वा समनुमतः, तस्य मिच्छा मे दुष्कृतम् ॥ २ ॥ त्रीन्द्रिया जीवा असंख्यातासंख्याताः कुन्थुदेहिकवृश्चिकेगोंभिक (?) गोयू-कामत्कुणपिपीलिकादिकास्तेषामुत्तापन० ॥ ३ ॥ चतुरिन्द्रिया जीवा असंख्यातासंख्याताः दशमशकमक्षिकापतङ्गकीटभ्रमरमधुकरगोमक्षिकादि-कास्तेषामुत्तापनं० ॥ ४ ॥ पंचेंद्रिया जीवा असंख्यातासंख्याताः अंडा-चिताः, पोताचिताः, जराचिताः, रसाचिताः, संस्वेदिनः,[१] सम्मूर्च्छिनः, उद्भेदिनः, उपपादिन अपि चतुरशीतियोनिप्रमुखशतसहस्रषु, एतेषामु-त्तापन० ॥ ५ ॥

अथेष्टदेवतानमस्कारानन्तर दैवसिकापाक्षिकचातुर्मासिकभेदेन त्रि प्रका-राणा प्रतिक्रमणाना । मध्ये दैवसिकप्रतिक्रमणायास्तावत्पीठिकादण्डकमाह—

इच्छामि भगवन ! दैवसिके आलोचयितुं पञ्चमहाव्रतानि । तत्र

प्रथमं महाव्रतं प्राणातिपाताद्विरमणं, द्वितीय महाव्रत मृषावादाद्विरमणं, तृतीयं महाव्रतमदत्तादानाद्विरमणं, चतुर्थं महाव्रतं मैथुनाद्विरमणं, पञ्चमं महाव्रतं परिग्रहाद्विरमणं, षष्ठमणुव्रतं रात्रिभोजनाद्विरमणं, ईर्यासमितौ, भाषासमितौ, एषणासमितौ आदाननिक्षेपणसमितौ, उच्चारप्रस्रवणश्लेष्म-शिंघाणकविकृतिप्रतिष्ठापनिकासमितौ, मनोगुप्तौ, वचोगुप्तौ, कायगुप्तौ, ज्ञानेषु, दर्शनेषु, चारित्रेषु, द्वाविंशतिषु, परीषहेषु, पञ्चविंशतिषु, भावनासु पञ्चविंशतिषु क्रियासु अष्टादशशीलसहस्रेषु चतुरशीतिगुणशतसहस्रेषु द्वादशानां संयमानां द्वादशानां तपसां, द्वादशानां अङ्गानां, चतुर्दशानां पूर्वाणां, दशानां मुण्डानां, दशानां श्रवणधर्मानां, दशानां धर्मध्यानां, नवानां ब्रह्मचर्यगुप्तीनां, नवानां नोकषायाणां, षोडशानां, कषायाणां, अष्टानां कर्मणा, अष्टानां प्रवचनमातृकाणां, अष्टानां शुद्धीनां, सप्तानां भवानां, सप्तविधसंसाराणां, षण्णा जीवनिकायानां, षण्णां आवश्यकानां, पञ्चानामिंद्रियाणां, पचानां महाव्रतानां, पंचानां समितीनां, पंचानां चारित्राणां, चतसृणां संज्ञानां, चतुर्णां प्रत्ययानां, चतुर्णां उप-सर्गाणां, मूलगुणानां, उत्तरगुणानां दृष्टिक्यां, पृष्टिक्यां, प्रादोषिक्यां, परितापनिक्यां, तस्य क्रोधेन, वा मानेन वा मायया वा लोभेन वा रागेन वा द्वेषेण वा मोहेन वा हास्येन वा भयेन वा प्रद्वेषेण वा प्रमादेन वा प्रेम्णा वा पिपासया वा लज्जया वा गौरवेण वा एतेषामत्यासनतायां त्रयाणां दण्डानां, तिसृणां लेश्यानां, त्रयाणां गौरवाणां, द्वयोरार्तरौद्रसंक्लेशपरिणामयोः, त्रयाणामप्रशस्तसंक्लेशपरिणामानां, मिथ्यादर्शनमिथ्याज्ञानमिथ्याचारित्राणां मिथ्यात्वप्रायोग्यं असंयमप्रायोग्यं कषायप्रायोग्यं योगप्रायोग्यं अप्रायोग्यसेवनताया प्रायोग्यगर्हायां, अत्र मे यः कश्चिद्देवासिकः रात्रिकः अतिक्रमः व्यतिक्रमः अतिचारः अनाचारः आभोगः अनाभोगः तस्य भगवन्! प्रतिक्रमामि मया प्रतिक्रान्तं, तस्य मे सम्यक्त्वमरण समाधिमरणं पण्डितमरणं वीर्यमरणं दुःखक्षयः कर्मक्षयः बोधिलाभः सुगतिगमनं समाधिमरण जिनगुणसंप्राप्तिर्भवतु मम। 'व्रतसमिती'—इत्यादि पठेत्। ( इति प्रतिक्रमणपीठिकादण्डकाः )

अथ सर्वातिचारविशुद्ध्यर्थं दैवसिक-( रात्रिक ) प्रतिक्रमणक्रियायां कृतदोषनिराकरणार्थं पूर्वाचार्यानुक्रमेण सकलकर्मक्षयार्थं भावपूजावंदना-स्तवसमेतं श्रीप्रतिक्रमणभक्तिकायोत्सर्गं करोम्यहम् । 'णमो अरहंताणं' ( इत्यादि दण्डकं पठित्वा कायोत्सर्गं कुर्यात् । अनन्तरं ) 'थोस्सामि' (इत्यादि पठेत् ) ।

## निषिद्धिकादंडकाः

णमो अरहंताणं णमो सिद्धाणं णमो आइरीयाणं ।
णमो उवज्झायाणं णमो लोए सव्वसाहूणं ॥

नमो जिनेभ्यः ३, नमो निसिद्धिकायै ३, नमोस्तु तुभ्यं ३, अर्हन्! सिद्ध ! बुद्ध ! नीरजः ! निर्मल ! सममनः ! शुभमनः ! समयोग ! समभाव ! शल्यघट्टानां शल्यघत्ताण ! निर्भय ! नीराग ! निर्दोष ! निर्मोह ! निर्मम ! निःशङ्क ! निःशल्य ! मानमायामृषामर्दक ! तपः-प्रभावन ! गुण-रत्न-शीलसागर ! अनन्त ! अप्रमेय ! महतिमहावीरवर्ध-मान बुद्धर्षेनमोऽस्तु तुभ्यं ३ ।

अर्हन्तश्च सिद्धाश्च बुद्धाश्च जिनाश्च केवलिनोऽवधिज्ञानिनो मनःपर्य-यज्ञानिनः चतुर्दशपुर्वाङ्गमिनः श्रुतसमितिसमृद्धाश्च, तपश्च द्वादशविध तपस्विनः, गुणाश्च गुणवन्तश्च, महर्षयः, तीर्थस्तीर्थंकराश्च, प्रवचनं प्रव-चनी च, ज्ञानं ज्ञानी च, दर्शनं दर्शनी च, संयमः संयताश्चविनयो विनी-ताश्च, ब्रह्मचर्यवासो ब्रह्मचारी च, गुप्तयश्चैव गुप्तिमन्तश्च, मुक्तयश्चैव मुक्तिमन्तश्च, समितयः समितिमन्तश्च, स्वसमयपरसमयविदः, क्षान्तिक्षप-काश्च क्षान्तिमन्तश्च, क्षीणमोहाः क्षणिवन्तश्च, बोधितबुद्धाश्च बुद्धि-मन्तश्च, चैत्यवृक्षाश्च चैत्यानि । ( एते सर्वे मम मङ्गलं भवन्तु ) ।

ऊर्ध्वाधस्तिर्यग्लोके सिद्धायतनानि नमस्करोमि, सिद्धनिषिद्धकाः अष्टा-पदपर्वते सम्मेदे ऊर्ज्वयन्ते चम्पायां पावायां मध्यमायां हस्तिवालिकामण्डपे ( नमस्यामीति सम्बन्धः ) । या अन्याः काश्चित् निषिद्धिकाः जीवलोके ईषत्प्राग्भारतलगतानां सिद्धानां बुद्धानां कर्मचक्रमुक्तानां नीरजसां निर्म-

लानां गुर्वाचार्योपाध्यायानां प्रवर्तिस्थविरकुलकराणां ( नमस्यामि ) चतुर्वणश्च श्रमणसंघश्च भरतैरावतेषु दशसु पञ्चसु महाविदेहेषु ( मम मङ्गलं भूयात् ) ये लोके संति साधवः संयता तपस्विन एते मम मंगलं पवित्रं। एतानहं मगल करोमि भावतो विशुद्धयः शिरसा, अभिवन्द्य सिद्धान् कृत्वाञ्जलिं मस्तके त्रिविधं त्रिकरणशुद्धः।

१. प्रतिक्रमामि भदन्त ! दैवसिकस्यातिचारस्य अनाचारस्य मनोदुश्चरित्रस्य वचनदुश्चरित्रस्य कायदुश्चरित्रस्य ज्ञानातिचारस्य दर्शनातिचारस्य तपोऽतिचारस्य वीर्यातिचारस्य चारित्रातिचारस्य पञ्चानां महाव्रतानां पञ्चानां समितीनां तिसृणां गुप्तीना षण्णामावश्यकानां षण्णां जीवनिकायानां विराधनायां पीलः (पीडा) कृतो वा कारितो वा क्रियमाणो वा समनुमतः तस्य मिच्छा मे दुष्कृतम्...... ।

२. अतिगमने निर्गमने स्थाने गमने चक्रमणे उद्वर्त्तने परिवर्तने आकुञ्चने प्रसारणे आमर्शे परिमर्शे उत्स्वपनापिते ( पूतकृते वा ) दन्तकटकायिने ( अतीवकर्कशशब्दे वा ) चलिते निषण्णे शयने सुप्तस्योत्थाय उद्भवने उद्भस्य उपविश्य शयने एकेन्द्रियाणां...... संघट्टनया संघातनया उत्तापनया परितापनया विराधनायां यत्र मे यः कश्चिद्दैवसिको रात्रिकोऽतिक्रमो व्यतिक्रमोऽतिचारोऽनाचारस्तस्य...... ।

३. ऐर्यापथिकायां विराधनायां ऊर्ध्वमुखं चरता वा अधोमुखं चरता वा तिर्यग्मुखं चरता वा दिशामुखं चरता वा विदिशामुखं चरता वा प्राणाचंक्रणतः बीजचंक्रमणतः हरितचंक्रमणतः उत्तिंग-पणक-दकमृद्-मर्कटक तन्तु-सत्वाना चंक्रमणतः पृथ्वीकायिकसंघट्टनया अप्कायिकसंघट्टनया तेजःकायिकसंघट्टनया वायुकायिकसंघट्टनया वनस्पतिकायिकसंघट्टनया त्रसकायिकसघट्टनया उत्तापनया परितापनया विराधनायां एतस्या मे यः कश्चिदैर्यापथिक्याम्...... ।

४. उच्चारप्रस्रवणक्ष्वेलसिंहानकविकृतिप्रतिस्थापनिकायां प्रतिस्थापयता ये केचित्प्राणा वा भूता वा जीवा वा सत्वा वा संघट्टिता वा संघातिता वा उत्तापिता वा परितापिता वा एतस्मिन् ....... ।

५. अनेषणया पानभोजनेन पणकभोजनेन बीजभोजनेन हरितभोजनेन अधःकर्मणा वा पश्चात्कर्मणा वा पुराकर्मणा वा उद्दिष्टकृतेन निर्दिष्टकृतेन दयासंसृष्टकृतेन रससंसृष्टकृतेन परिसातनिकया प्रतिष्ठापनिकया उद्देशिकया निर्देशिकया क्रीतकृते मिश्रे जाते स्थापिते रचिते अनिसृष्टे बलिप्राभृते प्राभृते घट्टिते मूर्छिते अतिमात्रभोजने एतस्यां ( अनेषणायां ) मे यः कश्चित् गोचरिशः .....।

६. स्वप्नेन्द्रियाया विराधनायां स्त्रीविपरियासिकायां दृष्टिविपरियासिकायां मनोविपरियासिकायां वचोविपरियासिकायां कायविपरियासिकायां भोजनविपरियासिकाया उच्च्यावज्ञाया स्वप्नदर्शनविपरियासिकायां पूर्वरते पूर्वखेलिते नानाचिन्तासु विश्रोत्रिकासु, एतस्या .....।

७. स्त्रीकथाया अर्थकथायां भक्तकथाया राजकथायां चोरकथायां वैरकथायां परपापण्डकथायां देशकथायां भाषाकथायां अकथायां विकथायां निष्ठुरकथायां परपैशून्यकथायां कान्दर्पिक्यां कौतुत्कुचिकायां डाम्बरिकायां मौखरिकायां आत्मप्रशंसनतायां परपरिवादनतायां परजुगुप्सनतायां परपीडनकरायां सावद्यानुमोदनिकायां एतस्यां .....।

८. आर्तध्याने रौद्रध्याने इहलोकसंज्ञाया परलोकसज्ञायां आहारसज्ञाया भयसज्ञायां मैथुनसज्ञाया परिग्रहसज्ञाया क्रोधशल्ये मानशल्ये मायाशल्ये लोभशल्ये प्रेमशल्ये पिपासाशल्ये निदानशल्ये मिथ्यादर्शनशल्ये क्रोधकषाये मानकषाये मायाकषाये लोभकषाये कृष्णलेश्यापरिणामे नीललेश्यापरिणामे कापोतलेश्यापरिणामे आरंभपरिणामे परिग्रहपरिणामे प्रतिश्रयाभिलाषपरिणामे मिथ्यादर्शनपरिणामे असंयमपरिणामे कषायपरिणामे पापयोगपरिणामे कायसुखाभिलाषपरिणामे शब्देषु रूपेषु गंधेषु रसेषु स्पर्शेषु कायिकाधिकरणिकायां प्रदोषिकायां परिद्रावणिक्यां प्राणातिपातिकासु, एतस्मिन् .. ....।

९ एकस्मिन् भावे अनाचारे, द्वयो रागद्वेषयोः, त्रिषु दण्डेषु, तिसृषु गुप्तिषु त्रिषु, गौरवेषु, चतुःषु, चतसृषु संज्ञासु, पञ्चसु महाव्रतेषु, पञ्चसु समितिषु, षट्सु जीवनिकायेषु, षट्सु आवश्यकेषु सप्तसु

भयेपु, अष्टसु मदेषु नवसु ब्रह्मचर्यगुप्तिषु, दशविधेषु श्रमणधर्मेषु, एकादशविधासु उपासकप्रतिमासु, द्वादशविधासु भिक्षुप्रतिमासु, त्रयोदशविधेषु क्रियास्थानेषु, चतुर्दशविधेषु भूतग्रामेषु पञ्चदशविधेषु प्रमादस्थानेषु षोडशविधेषु प्रवचनेषु, सप्तदशविधेसु असंयमेषु अष्टादशविधेषु असम्परायेषु, एकोनविंशतौ नाथाध्ययनेषु, विंशतौ असमाधिस्थानेषु, विंशेषु सबलेषु, द्वाविंशेषु परीसहेषु, त्रयोविंशेषु सूत्रकृताध्ययनेषु, चतुर्विंशेषु अर्हत्सु, पञ्चविंशतौ भावनासु, पञ्चविंशेषु क्रियास्थानेषु, षड्विंशतौ पृथिवीषु, सप्तविंशेषु अनगारगुणेषु, अष्टाविंशेषु आचारकल्पेषु एकोनत्रिंशत्सु पापसूत्रप्रसङ्गेषु, त्रिंशत्सु मोहनीयस्थानेषु, एकत्रिंशत्सु कर्मविपाकेषु द्वात्रिंशत्सु जिनोपदेशेषु त्रयस्त्रिंशत्प्रकारायां अत्यासादनतायां, संक्षेपेण जीवानामत्यासादनतायां, अजीवानामत्यासदनतायां, ज्ञानस्यात्यासादनतायां दर्शनस्य अत्यासादनतायां चारित्रस्यात्यासादनतायां तपसःअत्यासादनतायां वीर्यस्य अत्यासादनतायां तत्सर्वं पूर्वं दुश्चरित्र गर्हे, प्रत्युत्पन्नं अतिक्रान्तं प्रतिक्रमामि अनागतं प्रत्याख्यामि, अगर्हितं गर्हे, अनिन्दित निन्दामि, अनालोचितं आलोचयामि, अराधनां अभ्युत्तिष्ठामि, विराधनां प्रतिक्रमामि... ... ।

१०. इच्छामि भगवन्! इमं निर्ग्रंथ प्रवचन अनुत्तरं केवलियं परिपूर्ण नैकायिकसामायिकं संशुद्ध शल्यघट्टानां शल्यघातन सिद्धिमार्गं श्रेणिमार्गं, क्षांतिमार्गं मुक्तिमार्गं, प्रमुक्तिमार्गं मोक्षमार्गं प्रमोक्षमार्गं निर्याणमार्ग निर्वाणमार्ग सर्वदुःखपरिहाणिमार्ग सुचरित्रपरिनिर्वाणामार्ग अविसंपादक समाश्रयन्ति, प्रवचनं उत्तमं, तच्छ्रद्दधामि, तत्प्रतिपद्ये, तद्रोचे, तत्स्पृशामि, इद उत्तरमन्यन्नास्ति न भूतं [ न भवति ] न भविष्यति ज्ञानेन वा दर्शनेन वा चारित्रेण वा सूत्रेण वा । इतो जीवा सिद्ध्यंति बुद्ध्यन्ते मुच्यन्ते परिनिर्वायत्ति सर्वदुःखानामन्तं कुर्वंति परिविजानति, श्रमणोऽस्मि संयतोऽस्मि उपरतोऽस्मि उपशान्तोऽस्मि उपधिनिकृतिमानमायामृषामिथ्याज्ञानमिथ्यादर्शनमिथ्याचारित्र च प्रतिविरतोऽस्मि, सम्यग्ज्ञान सम्यग्दर्शनं सम्यग्चारित्रं च रोचे, यज्जिनवरैः प्रज्ञप्त अत्र.... ... ।

११. प्रतिक्रमामि भदन्त ! सर्वस्य, सर्वकालिक्याः, ईर्यासमितेः

भाषासमितेः एषणासमितेः आदाननिक्षेपणासमितेः उच्चार प्रश्रवण-खेल-सिंघाणक विकृतिप्रतिष्ठापनसमितेः मनोगुप्तेः वचोगुप्तेः कायगुप्तेः प्राणातिपाताद्विरमणायाः मृषावादाद्विरमणायाः अदत्तादानाद्विरमणायाः मैथुनाद्विरमणायाः परिग्रहाद्विरमणायाः रात्रिभोजनाद्विरमणायाः सर्वविराधनायाः सर्वधर्मातिक्रमतायाः सर्वमिथ्याचरितायाः ( विशुद्धेर्निमित्तं ) अत्र...... ।

इच्छामि भदन्त ! वीरभक्तिकायोत्सर्गं यो मम दैवसिको रात्रिकोऽतिचारोऽनाचार आभोगोऽनाभोगः कायिको वाचिको मानसिकः दुश्चिन्तितः दुर्भाषितः दुष्परिणामितः दुःस्वमितः ज्ञाने दर्शने चारित्रे सूत्रे सामायिके पञ्चानां महाव्रतानां पञ्चानां समितीनां तिसृणां गुप्तीनां षण्णां जीवनिकायानां षण्णां आवश्यकाना विराधनायां अष्टविधस्य कर्मणाः निर्घातनस्य अन्यथा उच्छ्वासितेन वा निःश्वासितेन वा उन्मिषितेन वा निर्मिषितेन वा खात्कृतेन वा छीत्कृतेन वा जम्भायितेन वा सूक्ष्मैः अङ्गचलाचलैः दृष्टिचलाचलैः एतैः सर्वैः असमाधिप्राप्तैः आचारैः, यावदर्हतां भगवतां पर्युपासनं ( दैवसिकप्रतिक्रमणायामष्टोत्तरशतोच्छ्वासैः षट्त्रिंशद्वारान् पञ्चनमस्कारोच्चारणं रात्रिप्रतिक्रमणायां तु चतुःपंचाशदुच्छ्वासैः अष्टादशवारान् पंचनमस्कारोच्चारणं पर्युपासन ) करोमि तावत्कायं पापकर्म दुश्चरित व्युत्सृजामि ।

---

# मुनिप्रतिक्रमणम्

३. ( इच्छामि भंते ! अट्ठमियम्मि आलोचेउं, अट्ठण्ह दिवसाणं अट्ठण्ह राईणं अब्भंतरादो पञ्चविहो आयारो णाणायारो दंसणायारो तवायारो वीरियायारो चरित्तायारो चेदि ।

इच्छामि भंते ! पक्खियम्मि आलोचेउं, पण्णरसण्हं दिवसाणं पण्णरसण्हं राईणं अब्भंतराओ पञ्चविहो आयारो णाणायारो दंसणायारो तवायारो वीरियायारो चरित्तायारो चेदि ।

इच्छामि भंते ! चाउमासियम्मि आलोचेउं, चउण्हं मासाणं अट्ठण्हं पक्खाणं वीसुत्तरसयदिवसाणं वीसुत्तरसयराईण अब्भंतराओ पचविहो आयारो णाणायारो दंसणायारो तवायारो वीरियायारो चरित्तायारो चेदि ।

इच्छामि भंते ! संवच्छरियम्मि आलोचेउ, बारसण्हं मासाणं, चउव्वीसण्हं पक्खाणं, तिण्हं छावट्ठिसयदिवसाणं, तिण्हं छावट्ठिसयराईण अब्भतराओ पञ्चविहो आयारो णाणायारो दंसणायारो तवायारो वीरियायारो चरित्तायारो चेदि ।

तत्थ णाणायारो, काले, विणए, उवहाणे, बहुमाणे, तहेव अणिण्हवणे, विंजण-अत्थ-तदुभये चेदि णाणायारो अट्ठविहो परिहाविदो, से अक्खहीणं वा, सरहीणं वा, पदहीणं वा, विंजणहीणं वा, अत्थहीणं वा, गथहीणं वा, थएसु वा, थुईसु वा, अत्थक्खाणेसु वा, अणियोगेसु वा अणियोगद्दारेसु वा, अकाले सज्झाओ कओ वा, कारिदो वा, कीरंतो वा समणुमण्णिदो, काले वा परिहाविदो, अच्छाकारिद, मिच्छा मेलिदं, आमेलिदं, वामेलिद, अण्णहादिण्ण, अण्णहा पडिच्छिद, आवासएसु परिहीणदाए, तस्स मिच्छा मे दुक्कड ॥ १ ॥

दंसणायारो अट्ठविहो, णिस्संकिय णिक्कंखिय णिव्विदिगिंछा अमूढदिट्ठी य, उवगूहण ठिदिकरणं वच्छल्ल पहावणा चेदि । अट्ठविहो परिहाविदो, संकाए कंखाए विदिगिंछाए अण्णदिट्ठीपसंसणणाए परपाखण्डपसंसणदाए अणायदणसेवणदाए अवच्छल्लदाए अप्पहावणदाए, तस्स मिच्छा मे दुक्कडं ॥ २ ॥

तवायारो बारसविहो, अब्भतरो छव्विहो बाहिरो छव्विहो चेदि तत्थ बाहिरो अणसणं आमोदरिय वित्तिपरिसंखा रसपरिच्चाओ सरीरपरिच्चाओ विवित्तसयणासणं चेदि । तत्थ अब्भंतरो पायच्छित्तं विणओ वेज्जावच्चं सज्झाओ झाणं विउस्सग्गो चेदि । अब्भतरं बाहिरं बारसविह तवोकम्म

निरतिशया निरवधयो निःश्रेयसमावसंति सुखं ।। १३२ ।। काले कल्पशतेऽपि च गते शिवानां न विक्रिया लक्ष्या । उत्पातोऽपि यदि स्यात् त्रिलोकसंभ्रांतिकरणपटुः ।। १३३ ।। निःश्रेयसमधिपन्नास्त्रैलोक्यशिखामणिश्रियं दधते । निष्किट्टकालिकाच्छविच भीकरभासुरात्मानः ।। १३४ ।। पूजार्थाज्ञैश्वर्यैर्बलपरिजनकामभोगभूयिष्टैः । अतिशयितभुवनमद्भुतमभ्युदय फलति सद्धर्मः ।। १३५ ।। श्रावकपदानि देवैरेकादश देशितानि येषु खलु । स्वगुणाः पूर्वगुणैः सह संतिष्ठंते क्रमविवृद्धः ।। १३६ ।। सम्यग्दर्शनशुद्धः संसारशरीरभोगनिर्विण्णः । पंचगुरुचरणशरणो दर्शनिकस्तत्त्वपथगृह्यः ।। १३७ ।। निरति क्रमणमणुव्रतपचकमपि शीलसप्तकं चापि । धारयते निःशल्यो योऽसौ व्रतिनां मतो व्रतिकः ।। १३८ ।। चतुरावर्त्तत्रितयश्चतुः प्रमाणः स्थितो यथाजातः सामयिको द्विनिपद्यस्त्रियोगशुद्धस्त्रिसंध्यमभिवंदी ।। १३९ ।। पर्वदिनेषु चतुर्ष्वपि मासे मासे स्वशक्तिमनिगुह्य । प्रोपधनियमविधायी प्रणिधिपरः प्रोपधानशनः ।। १४० ।। मूलफलशाकशाखाकरीरंकदप्रसूनबीजानि । नामानि योऽत्ति सोऽयं सचित्तविरतो दयामूर्तिः ।। १४१ ।। अन्नं पानं खाद्य लेह्यं नाश्नाति यो विभावर्यां । सच रात्रिभुक्तिविरतः सत्वेष्वनुकपमानमनाः ।। १४२ ।। मलबीज मलयोनिं गलन्मलं पूतिगधि बीभत्सं । पश्यन्नंगमनंगाद्विरमति यो ब्रह्मचारी सः ।। १४३ ।। सेवाकृपिवाणिज्यप्रमुखादारंभतो व्युपारमति प्राणातिपातहेतोर्योऽसावारंभविनिवृत्तः ।। १४४ ।। बाह्येषु दशसु वस्तुषु ममत्वमुत्सृज्य निर्ममत्वरतः । स्वस्थः संतोषपरः परिचित्तपरिग्रहाद्विरतः ।। १४५ ।। अनुमतिरारंभे वा परिग्रहे वैहिकेपु कर्मसु वा । नास्ति खलु यस्य समधीरनुमतिविरतः स मंतव्यः ।।१४६।। गृहतो मुनिवनमित्वा गुरूपकंठे व्रतानि परिगृह्य । भैक्ष्याशनस्तपस्यन्नुत्कृष्टश्चेलखंडधरः ।।१४७।। पापमरातिर्धर्मो बंधुर्जीवस्य चेति निश्चिन्वन् । समयं यदि जानीते श्रेयो ज्ञाता ध्रुवं भवति ।। १४८ ।। येन स्वय वीतकलंकविद्यादृष्टिक्रियारत्नकरंडभावं । नीतस्तमायाति पतीच्छ्येव सर्वार्थसिद्धिस्त्रिपु विष्टपेपु ।। १४८ ।। सुखयतु सुखभूमिः कामिन कामिनीव, सुतमिव जननी मां शुद्धशीला भुनक्तु । कुलमिव

गुणभूषा कन्यका संपुनीताज्जिनपतिपदपद्मप्रेक्षिणी दृष्टिलक्ष्मी ॥१५०॥

इति रत्नकरण्डश्रावकाचार समाप्त ।

# अथ द्रव्यसंग्रह

जीवमजीवं दव्वं, जिणवरवसहेण जेण णिद्दिट्ठं । देविंदविंदवंदं, वंदे त सव्वदा सिरसा ॥ १ ॥ जीवो उवओगमओ अमुत्ति कत्ता सदेहपरिमाणो । भोत्ता संसारत्थो सिद्धो सो विस्ससोड्ढगई ॥ २ ॥ तिक्काले चदु पाणा इंदिय बलमाउ आणपाणो य । ववहारा सो जीवो णिच्चयणयदो दु चेदणा जस्स ॥ ३ ॥ उवओगो दुवियप्पो दंसणं चदुधा । चक्खु अचक्खु ओही दसणमध केवलं णेयं ॥ ४ ॥ णाणं अट्ठवियप्पं मदिसुदओही अणाणणाणाणि । मणपज्जय केवलमवि पच्चक्खपरोक्खभेयं च ॥ ५ ॥ अट्ठचदुणाणदंसण सामण्णं जीवलक्खणं भणियं । ववहारा सुद्धणया सुद्धं पुण दंसण णाण ॥ ६ ॥ वण्ण रस पंच गधा दो फासा अट्ठ णिच्चया जीवे । णो संति अमुत्ति तदो ववहारा मुत्ति बंधादो ॥ ७ ॥ पुग्गलकम्मादीण कत्ता ववहारदो दु णिच्चयदो । चेदणकम्माणादा सुद्धणया सुद्धभावाणं ॥ ८ ॥ ववहारा सुहदुक्खं पुग्गलकम्मप्फलं पभुंजेदि । आदा णिच्च यणयदो चेदण भाव खु आदस्स ॥ ९ ॥ अणुगुरुदेहपमाणो उवसंहारप्पसप्पदो चेदा । असमुहदो ववहारा णिच्चयणयदो असंखदेसो वा ॥ १० ॥ पुढविजलतेउवाऊ वणप्फदी विविहथावरेइंदी । विगतिगचदुपचक्खा तसजीवा होंति संखादी ॥ ११ ॥ समणा अमणा णेया पचेंदिय णिम्मणा परे सवे । बादर सुहुमेइंदी सव्वे पज्जत्त इदरा य ॥१२॥ मग्गणगुणठाणेहिं य चउदसहिं हवंति तह असुद्धणया । विण्णेया संसारी सव्वे सुद्धा हु सुद्धणया ॥ १३ ॥ णिक्कम्मा अट्ठगुणा, किंचूणा चरमदेहदो सिद्धा । लोयग्गठिदा णिच्चा उत्पादवयेहिं संजुत्ता ॥ १४ ॥ पयडिट्ठिदिअणुभागप्पदेसबंधेहिं सव्वदो मुक्को । उड्ढ गच्छदि सेसा विदिसावज्जं गदिं जति ॥ १५ ॥ अज्जीवो पुण णेओ पुग्गल धम्मो अध-

म्म आयासं । कालो पुग्गल मुत्तो रूवादिगुणो अमुत्ति सेसा दु ॥१६॥ सद्दो बंधो सुहमो थूलो संठाणभेदतमछाया । उज्जो दादवसहिया पुग्गल-दव्वस्स पज्जाया ॥ १७ ॥ गइपरिणयाण धम्मो पुग्गलजीवाण गमणसहयारी । तोयं जह मच्छाणं अच्छंता णेव सो णेई ॥ १८ ॥ ठाणजुदाण अधम्मो पुग्गलजीवाण ठाणसहयारी । छाया जह पहियाणं गच्छंता णेव सो धरई ॥ १९ ॥ अवगासदाणजोग्गं जीवादीणं वियाण आयासं । जेण्हं लोगागासं अल्लोगागासमिदि दुविहं ॥ २० ॥ धम्माधम्मा कालो पुग्गल-जीवा य संति जावदिये । आयासे सो लोगो तत्तो परदो अलोगुत्तो ॥ २१ ॥ दव्वपरिवट्टरूवो जो सो कालो हवेइ ववहारो । परिणामादी-लक्खो वट्टणलक्खो य परमट्ठो ॥ २२ ॥ लोयायासपदेसे इक्केक्के जे ठिया हु इक्केक्का । रयणाणं रासीमिव ते कालाणू असंखदव्वाणि ॥२३॥ एवं छब्भेयमिदं जीवाजीवप्पभेददो दव्वं उत्तं कालविजुत्तं णायव्वा पंच अत्थिकाया दु ॥ २४ ॥ संति जदो तेणेदे अत्थीति भणंति जिणवरा जम्हा । काया इव बहुदेसा तम्हा काया य अत्थिकाया य ॥ २५ ॥ होंति असंखा जीवे धम्मा धम्मे अणंत आयासे । मुत्ते तिविह पदेसा कालस्सेगो ण तेण सो काओ ॥ २६ ॥ एयपदेसो वि अणू णाणाखंधप्पदेसदो होदि । बहुदेसो उवयारा तेण य काओ भणंति सव्वण्हू ॥ २७ ॥ जावदियं आयासं अविभागी पुग्गलाणुवट्ठद्धं । त खु पदेसं जाणे सव्वाणुट्ठाण दाणरिहं ॥ २८ ॥ आसवबंधणसंवर णिज्जरमोक्खा सपुण्णपावा जे । जीवाजीवविसेसा ते वि समासेण पभणामो ॥ २९ ॥ आसवदि जेण कम्मं परिणामेणप्पणो स विण्णेओ । भावासवो जिणुत्तो कम्मासवणं परो होदि ॥ ३० ॥ मिच्छत्ताविरदिपमादजोगकोहादओऽथ विण्णेया । पण पण पणदह तिय चदु–, कमसो भेदा दु पुव्वस्स ॥ ३१ ॥ णाणावरणादीणं जोग्गं जं पुग्गल समासवदि । दव्वासवो स णेओ अणेयभेदो जिणक्खादो ॥ ३२ ॥ बज्झदि कम्मं जेण दु चेदणभावेण भावबंधो सो । कम्मादपदेसाणं अण्णोण्णपवेसणं इदरो ॥ ३३ ॥ पयडिट्ठिदिअणुभाग,–प्पदेसभेदा दु चदुविधो बंधो । जोगा पयडिपदेसा ठिदिअणुभाग कसायदो होंति

॥ ३४ ॥ चेदणपरिणामो जो कम्मस्सासवणिरोहणे हेऊ । सो भावसंवरो खलु दव्वासवरोहणो अण्णो ॥ ३५ ॥ वदसमिदीगुत्तीओ धम्माणुपिहा परीसहजओ य । चारित्तं वहुभेयं णायव्वा भावसंवरविसेसा ॥ ३६ ॥ जहकालेण तवेण य भुत्तरसं कम्मपुग्गलं जेण । भावेण सडदि णेया तस्सडणं चेदि णिज्जरा दुविहा ॥ ३७ ॥ सव्वस्स कम्मणो जो खयहेदू अप्पणो हु परिणामो । णेओ स भावमोक्खो दव्वविमोक्खो य कम्मपुध-भावो ॥ ३८ ॥ सुहअसुहभावजुत्ता पुण्णं पावं हवंति खलु जीवा । सादं सुहाउ णामं गोदं पुण्णं पराणि पावं च ॥ ३९ ॥ सम्मद्दंसण णाणं चरणं मोक्खस्स कारणं जाणे । ववहारा णिच्चयदो तत्तियमइओ णिओ अप्पा ॥ ४० ॥ रयणत्तयं ण वट्टइ अप्पाणं मुयत्तु अण्णदवियह्मि । तह्मा तत्तियमइओ होदि हु मोक्खणस्स कारणं आदा ॥ ४१ ॥ जीवादीसद्दहणं सम्मत्तं रूवमप्पणो तं तु दुरभिणिवेसविमुक्कं णाणं सम्म खु होदि सदि जह्मि ॥ ४२ ॥ संसयविमोहविब्भमविवज्जियं अप्पपरसरूवस्स । गहणं सम्मं णाणं सायारमणेयमेयं च ॥ ४३ ॥ जं सामण्णं गहणं भावाणं णेव कट्टुमायारं । अविसेसिदूण अट्ठे दंसणमिदि भण्णये समये ॥ ४४ ॥ दसणपुव्वं णाणं छदमत्थाणं ण दुण्णि उवओगा । जुगवं जह्मा केवलि, णाहे जुगवं तु ते दो वि ॥ ४५ ॥ असुहादो विणिवित्ती सुहे पवित्ती य जाण चारित्तं । वदसमिदिगुत्तिरूवं । ववहारणया दु जिणभणियं ॥४६॥ वहिरब्भंतरकिरिया रोहो भवकारणप्पणासट्ठं । णाणिस्स जं जिणुत्तं तं परमं सम्मचारित्तं ॥ ४७ ॥ दुविहंपि मोक्खहेउं झाणे पाउणदि जं मुणी णियमा । तह्मा पयत्तचित्ता जूयं ज्झाणं समब्भसह ॥ ४८ ॥ मा मुज्झह मा रज्जह मा दुस्सह इट्ठणिट्ठअत्थेसु । थिरमिच्छहि जइ चित्तं विचित्तझा-णप्पसिद्धीये ॥ ४९ ॥ पणतीस सोल छप्पण चदु दुगमेगं च जवह झाएह । परमेट्ठिवाचयाण अण्णं च गुरूवदेसेण ॥ ५० ॥ णट्ठ चदुघाइ कम्मो दसणसुहणाणवीरियमईओ । सुहदेहत्थो अप्पा सुद्धो अरिहो विचि-तिज्जो ॥ ५१ ॥ णट्ठट्ठकम्मदेहो लोयालोयस्स जाणओ दट्ठा । पुरिसायारो अप्पा सिद्धो ज्झाएह लोयसिहरत्थो ॥ ५२ ॥ दंसणणाणपहाणे वीरिय-

चारित्तवरतवायारे । अप्पं परं च जुंजइ सो आइरियो मुणी ज्झेओ ॥ ५३ ॥ जो रयणत्तयजुत्तो णिच्च धम्मोवएसणे णिरदो । सो उवज्झाओ अप्पा जदिवरवसहो णमो तस्स ॥ ५४ ॥ दंसणणाणसमग्गं मग्गं मोक्खस्स जो हु चारित्त । साधयदि णिच्च सुद्धं साहू स मुणी णमो तस्स ॥ ५५ ॥ जं किंचि वि चिंतंतो णिरीहवित्ती हवे जदा साहू । लद्धूणय एयत्त तदा हु तं तस्स णिच्चय ज्झाणं ॥ ५६ ॥ मा चिट्ठह मा जंपह, मा चिंतह किंचि जेण होइ थिरो । अप्पा अप्पम्मि रओ इणमेव परं हवे ज्झाण ॥ ५७ ॥ तवसुदवदवं चदा ज्झाणरहधुंरधरो हवे जह्मा । तह्मा तत्तियणिरदा तल्लद्धीए सदा होह ॥ ५८ ॥ दव्वसंगहमिणं मुणिणाहा दोससंचयचुदा सुदपुण्णा । सोधयंतु तणुसुत्तधरेण णेमिचंदमुणिणा भणिय जं ॥ ५९ ॥

# अथाद्याष्टकस्तोत्रम् ।

अद्य मे सफलं जन्म नेत्रे च सफले मम । त्वामद्राक्षं यतो देव हेतुमक्षयसम्पदः ॥ १ ॥ अद्य संसारगम्भीरपारावारः सुदुस्तरः । सुतरोऽयं क्षणेनैव जिनेन्द्र तव दर्शनात् ॥ २ ॥ अद्य मे क्षालितं गात्रं नेत्रे च विमले कृते । स्नातोऽहं धर्मतीर्थेषु जिनेन्द्र तव दर्शनात् ॥ ३ ॥ अद्य मे सफलं जन्म प्रशस्तं सर्वमंगलम् । संसारार्णवतीर्णोऽहं जिनेन्द्र तव दर्शनात् ॥ ४ ॥ अद्य कर्माष्टकज्वालं विधूतं सकषायकम् । दुर्गतेर्विनिवृत्तोऽहं जिनेन्द्र तव दर्शनात् ॥ ५ ॥ अद्य सौम्या ग्रहा सर्वे शुभाश्चैकादश स्थिताः । नष्टानि विघ्नजालानि जिनेन्द्र तव दर्शनात् ॥ ६ ॥ अद्य नष्टो महाबन्धः कर्मणां दुःखदायकः । सुखसंगमसमापन्नो जिनेन्द्र तव दर्शनात् । अद्य कर्माष्टकं नष्टं दुःखोत्पादनकारकम् । सुखाम्भोधिनिमग्नोऽहं जिनेन्द्र तव दर्शनात् ॥ ८ ॥ अद्य मिथ्यान्धकारस्य हन्ता ज्ञानदिवाकरः । उदितो मच्छरीरेऽस्मिन् जिनेन्द्र तव दर्शनात् ॥ ९ ॥ अद्याहं सुकृती

भूतो निर्धूताशेषकल्मषः। भुवनत्रयपूज्योऽहं जिनेन्द्र तव दर्शनात् ॥ १०॥ अद्याष्टकं पठेद्यस्तु गुणानन्दितमानसः। तस्य सर्वार्थसंसिद्धिर्जिनेन्द्र तव दर्शनात् ॥ ११ ॥

# अथ दृष्टाष्टकस्तोत्रम्

दृष्टं जिनेन्द्रभवनं भवतापहारि, भव्यात्मनां विभवसंभवभूरिहेतुः। दुग्धाब्धिफेनधवलोज्ज्वलकूटकोटि-नद्धध्वजप्रकरराजिविराजमानम् ॥ १ ॥ दृष्टं जिनेन्द्रभवनं भुवनैकलक्ष्मीधामर्द्धिवर्द्धितमहामुनिसेव्यमानम्। विद्याधरामरवधूजनमुक्तदिव्य-पुण्याञ्जलिप्रकरशोभितभूमिभागम् ॥ २ ॥ दृष्टं जिनेन्द्रभवनं भवनादिवास-विख्यातनाकगणिकागणगीयमानम्। नानामणिप्रचयभासुररश्मिजाल-व्यालीढनिर्मलविशालगवाक्षजालम् ॥ ३ ॥ दृष्टं जिनेन्द्रभवनं सुरसिद्धयक्ष-गन्धर्वकिन्नरकरार्पितवेणुवीणा। संगीतमिश्रितनमस्कृतधीरनादै-रापूरिताम्बरतलोरुदिगन्तरालम् ॥ ४ ॥ दृष्टं जिनेन्द्रभवनं विपलद्विलोल-मालाकुलालितलितालक विभ्रमाणम्। माधुर्यवाद्यलयनृत्यविलासिनीनां, लीलाचलद्वलयनूपुरनादरम्यम् ॥ ५ ॥ दृष्टं जिनेन्द्रभवनं मणिरत्नहेमसारोज्ज्वलैः कलशचामरदर्पणाद्यैः। सन्मंगलैः सततमष्टशतप्रभेदै-र्विभ्राजित विमलमौक्तिकदामशोभम् ॥ ६ ॥ दृष्टं जिनेन्द्रभवनं वरदेवदारु-कर्पूरचन्दनतरुस्कसुगंधिधूपैः। मेघायमानगगने पवनाभिघात चञ्चच्चलद्विमलकेतनतुङ्गशालम् ॥ ७ ॥ दृष्ट जिनेन्द्रभवनं धवलातपत्र-च्छायानिमग्नतनुयक्षकुमारवृन्दैः। दोधूयमानसितचामरपंक्तिभासं, भामंडलद्युतियुतप्रतिमाभिरामम् ॥ ८ ॥ दृष्टं जिनेन्द्रभवन विविधप्रकार-पुष्पोपहाररमणीयसुरत्नभूमि। नित्यं वसंततिलकश्रियमा दधानं सन्मगलं सकलचन्द्रमुनीन्द्रवन्द्यम् ॥ ९ ॥ दृष्ट मयाद्य मणिकाञ्चनचित्र-तुङ्गसिंहासनादिजिनविम्बविभूतियुक्तम्। चैत्यालय यदतुल परिकीर्तितं मे, सन्मंगल सकलचन्द्रमुनीन्द्रवन्द्यम् ॥ १० ॥

# अथ परमानन्दस्तोत्रम्

परमानंदसंयुक्तं, निर्विकारं निरामयम् ॥ ध्यानहीना न पश्यन्ति, निजदेहे व्यवस्थितम् अनंतसुखसंपन्नं, ज्ञानामृतपयोधरम् ॥ अनंतवीर्य-सम्पन्नं, दर्शनं परमात्मनः ॥ २ ॥ निर्विकारं निराबाध, सर्वसंगविवर्जि-तम् । परमानन्दसम्पन्नं, शुद्धचैतन्यलक्षणम् ॥ ३ ॥ उत्तमा स्वात्मचिंता स्यात्, मोहचिंता च मध्यमा । अधमा कामचिंता स्यात्, परचिंताधमाधमा ॥ ४ ॥ निर्विकल्पसमुत्पन्नं, ज्ञानमेव सुधारसम् । विवेकमंजलिं कृत्वा, तं पिबंति तपस्विनः ॥ ५ ॥ सदानंदमय जीवं, यो जानाति स पंडितः । स सेवते निजात्मान, परमानंदकारणम् ॥ ६ ॥ नलिनाच्च यथा नीरं भिन्न तिष्ठति सर्वदा । सोऽयमात्मा स्वभावेन, देहे तिष्ठति निर्मलः ॥ ७ ॥ द्रव्य-कर्ममलैर्मुक्तं, भावकर्मविवर्जितम् । नोकर्मरहित सिद्धं, निश्चयेन चिदा-त्मकम् ॥ ८ ॥ आनंदं ब्रह्मणो रूपं, निजदेहे व्यवस्थितम् । ध्यानहीना न पश्यंति, जात्यन्धा इव भास्करम् ॥ ९ ॥ सद्ध्यानं क्रियते भव्यो, मनो येन विलीयते । तत्क्षणं दृश्यते शुद्ध, चिच्चमत्कारलक्षणम् ॥ १० ॥ ये ध्यानलीना मुनयः प्रधानाः, ते दुःखहीना नियमाद्भवंति सम्प्राप्य शीघ्रं परमात्मतत्त्वं, व्रजंति मोक्षं क्षणमेकमेव ॥ ११ ॥ आनदरूप परमात्मतत्त्वं समस्तसंकल्पविकल्पमुक्तम् । स्वभावलीना निवसंति नित्य, जानाति योगी स्वयमेव तत्त्व ॥ १२ ॥ निजानदमयं शुद्ध, निराकारं निरामयम् । अनत-सुखसम्पन्नं सर्वसंगविवर्जितम् ॥ १३ ॥ लोकमात्रप्रमाणोयं, निश्चये न हि संशयः । व्यवहारे तनुमात्रः, कथितः परमेश्वरैः ॥ १४ ॥ यत्क्षणं दृश्यते शुद्धं, तत्क्षणं गतविभ्रमः । स्वस्थचित्तः स्थिरीभूत्वा, निर्विकल्प-समाधितः ॥ १५ ॥ स एव परम ब्रह्म, स एव जिनपुंगवः । स एव परम तत्त्वं, स एव परमो गुरुः ॥ १६ ॥ स एव परम ज्योतिः स एव परमं तपः । स एव परमं ध्यानं, स एव परमात्मकः ॥ १७ ॥ स एव सर्व-

कल्याणं, स एव सुखभाजनम्। स एव शुद्धचिद्रूपं स एव परमं शिवः ॥ १८ ॥ स एव परमानंदः, स एव सुखदायकः। स एव परमज्ञानं स एव गुणसागरः ॥ १९ ॥ परमाह्लादसंपन्नं, रागद्वेषविवर्जितम्। सोहं तं देहमध्येषु यो जानाति स पंडितः ॥ २० ॥ आकाररहितं शुद्ध, स्वस्व-रूपे व्यवस्थितम्। सिद्धमष्टगुणोपेत, निर्विकारं निरंजनम् ॥ २१ ॥ तत्स-दृश निजात्मान, यो जानाति स पंडितः। सहजानदचैतन्यप्रकाशाय मही-यसे ॥ २२ ॥ पाषाणेषु यथा हेम, दुग्धमध्ये यथा घृतम्। तिलमध्ये यथा तैलं, देहमध्ये तथा शिवः ॥ २३ ॥ काष्ठमध्ये यथा वह्निः, शक्ति-रूपेण तिष्ठति। अयमात्मा शरीरेषु, यो जानाति स पडितः ॥ २४ ॥

## श्रावक-प्रतिक्रमणम्।



जीवे प्रमादजनिताः प्रचुराः प्रदोषा यस्मात्प्रतिक्रमणतः प्रलयं प्रया-न्ति। तस्मात्तदर्थममलं मुनिबोधनार्थं वक्ष्ये विचित्रभवकर्मविशोधनार्थम् ॥ १ ॥ पापिष्ठेन दुरात्मना जडधिया मायाविना लोभिना रागद्वेषमलीम-सेन मनसा दुष्कर्म यन्निर्मितम्। त्रैलोक्याधिपते जिनेन्द्र! भवतः श्रीपाद-मूलेऽधुना निन्दापूर्वमहं जहामि सततं वर्वर्तिषुः सत्पथे ॥ २ ॥ खम्मामि सव्वजीवाणं सव्वे जीवा खमंतु मे। मेत्ती मे सव्वभूदेसु वेरं मज्झं ण केणवि ॥ ३ ॥ रागबंधपदोसं च हरिसं दीणभावय। उस्सुगत्तं भयं सोगं रदिम-रदिं च वोस्सरे ॥ ४ ॥ हा दुट्ठकयं हा दुट्ठचिंतियं भासियं च हा दुट्ठं। अंतो अंतो उज्झमि पच्छुत्तावेण वेयंतो ॥ ५ ॥ दव्वे खेत्ते काले भावे य कदावराहसोहणय। णिंदणगरहणजुत्तो मणवयकाएण पडिकमणं ॥ ६ ॥

एइंदिय-बेइंदिय-तेइंदिय-चउरिंदिय-पंचेंदिय-पुढविकाइय-आउकाइय-तेउकाइय-वाउकाइय-वणप्फदिकाइय तस्सकाइया, एदेसिं उद्दावणं परि-दावणं विराहणं उवघादो कदो वा कारिदो वा कीरंतो वा समणुमण्णिदो

तस्स मिच्छा मे दुक्कडं ।

दंसणवयसामाइयपोसहसच्चित्तरायभत्ते य ।
बंभारंभपरिग्गहअणुमणुमुद्दिट्ठ देसविरदेदे ॥ १ ॥

एयासु जधाकहिदपडिमासु पमादाइकयाइचारसोहणट्ठं छेदोवट्ठावणं होदु मज्झं ।

अरहंतसिद्धआइरियउवज्झायसव्वसाहुसक्खियं सम्मत्तपुव्वगं सुव्वदं दिढव्वद, समारोहियं मे भवदु मे भवदु मे भवदु ।

देवसियपडिक्कमणाए सव्वाइचारविसोहिणिमित्तं पुव्वाइरियकमेण अलोयणसिद्धभत्तिकाउस्सग्गं करेमि

## सामायिकदण्डकः—

णमो अरहंताणं णमो सिद्धाणं णमो आइरियाणं ।
णमो उवज्झायाणं णमो लोए सव्वसाहूण ॥ २ ॥

चत्तारि मंगल—अरहंत मंगलं, सिद्ध मंगलं, साहु मंगलं, केवलि पण्णत्तो धम्मो मंगलं ।

चत्तारि लोगोत्तमा—अरहंतलोगोत्तमा, साहु लोगोत्तमा, केवलिपण्णत्तो धमो लोगोत्तमा ।

चत्तारि सरणं पव्वजामि—अरहंत सरणं पव्वजामि, सिद्ध सरणं पव्वजामि, साहु सरणं पव्वजामि, केवलिपण्णत्तो धम्मो सरणं पव्वजामि ।

अड्ढाइज्जदीवदोसमुद्देसु पण्णारसकम्मभूमीसु जाव अरहंताणं भयवंताणं आदियराणं तित्थयराणं जिणाण जिणोत्तमाणं केवलियाणं, सिद्धाणं बुद्धाणं परिणिव्वुदाण अंतयडाणं पारयडाणं, धम्माइरियाणं, धम्मदेसयाणं, धम्मणायगाणं, धम्मवरचाउरंगचक्कवट्टीणं देवाहिदेवाणं, णाणाणं दंसणाणं चरित्ताणं सदा करेमि किरियम्मं ।

करेमि भंते ! सामाइयं सव्वं सावज्जजोगं पच्चक्खामि, जावजीवं तिविहेण मणसा वचिया काएण ण करेमि ण कारेमि अण्णं करंतं पि ण समणुमणामि । तस्स भंते ! अइचारं पडिक्कमामि, णिंदामि, गरहामि अप्पाणं, जाव अरहंताणं भयवंताणं पज्जुवासं करेमि ताव कायं पावक-

म्मं दुच्चरियं वोस्सरामि।

णमोकार ६ गुणिया। कायोत्सर्ग उच्छ्वास २७।

---

## चतुर्विंशतिस्तवः—

थोस्सामि हं जिणवरे तित्थयरे केवलीअणंतजिणे। णरपवरलोयमहिए विहुयरयमले महापण्णे ॥ १ ॥ लोयस्सुज्जोययरे धम्मंतित्थंकरे जिणे वंदे। अरहते कित्तिस्से चउवीसं चेव केवलिणो ॥ २ ॥ उसहमजियं च वंदे संभवमभिणंदणं च सुमइं च। पउमप्पहं सुपासं जिणं च चंदप्पहं वंदे ॥ ३ ॥ सुविहं च पुप्फयंतं सीयल सेयंस वासुपुज्जं च। विमलमणंतं भयवं धम्मं संतिं च वंदामि ॥ ४ ॥ कुन्थुं च जिणवरिंदं अरं च मल्लिं च सुव्वयं च णमिं। वंदामि रिट्ठणेमिं तहपासं वड्ढमाणं च ॥ ५ ॥ एवं मए अभित्थुआ विहुयरयमला पहीणजरमरणा। चउवीसं पि जिणवरा तित्थयरा मे पसीयंतु ॥ ६ ॥ कित्तिय वंदिय महिया एए लोगोत्तमा जिणा सिद्धा। आरोग्गणाणलाहं दिंतु समाहिं च मे बोहिं ॥ ७ ॥ चंदेहिं णिम्मलयरा आइच्चेहिं अहिय पयासंता। सायरमिव गभीरा सिद्धा सिद्धिं मम दिसंतु ॥ ८ ॥

---

श्रीमते वर्धमानाय नमो नमितविद्विषे।
यज्ज्ञानान्तर्गतं भूत्वा त्रैलोक्यं गोष्पदायते ॥ १ ॥

## सिद्धभक्तिः—

तवसिद्धे णयसिद्धे संयमसिद्धे चरित्तसिद्धे य।
णाणम्मि दंसणम्मि य सिद्धे सिरसा णमसामि ॥ २ ॥

इच्छामि भंते! सिद्धभत्तिकाउस्सग्गो कओ तस्सालोचेउ, सम्मणाणसम्मदंसण सम्मचरित्तजुत्ताणं अट्ठविहकम्ममुक्काणं अट्ठगुणसंपण्णाणं उड्ढलोयमत्थयम्मि पइट्ठियाणं तवसिद्धाण णयसिद्धाणं चरित्तसिद्धाणं सम्मणाण-सम्मदंसण सम्मचरित्तसिद्धाण अदीदाणागदवट्टमाणकालत्तय-

सिद्धाणं सव्वसिद्धाणं णिच्चकालं अंचेमि पूजेमि वंदामि णमंसामि दुक्खक्खओ कम्मक्खओ बोहिलाहो सुगइगमणं समाहिमरणं जिणगुणसंपत्ति होउ मज्झं।

## आलोचना -

इच्छामि भंते! देवसियं आलोचेउं। तत्थ-पंचुंबरसहियाइं सत्त विवसणाइं जो विवज्जेइ। सम्मत्तविसुद्धमई सो दंसणसावओ भणियो ॥१॥ पञ्च य अणुव्वयाइं गुणव्वयाइं हवंति तह तिण्णि। सिक्खावयाइं चत्तारि जाण विदियम्मि ठाणम्मि ॥ २ ॥ जिणवयणधम्मचेइयपरमेट्ठिजिणयालयाण णिच्चं पि। जं वंदणं तियालं कीरइ सामाइयं त खु ॥ ३ ॥ उत्तममज्झजहण्णं तिविहं पोसहविहाणमुद्दिट्ठं। सगसत्तीए मासम्मि चउसु पव्वेसु कायव्व ॥ ४ ॥ जं वज्जिजदि हरिदं तयपत्तपवालकंदफलबीयं। अप्पासुगं च सलिलं सच्चित्तणिव्वत्तिमं ठाणं ॥ ५ ॥ मणवयणकायकदकारिदाणुमोदेहिं मेहुणं णवधा। दिवसम्मि जो विवज्जदि गुणम्मि सो सावओ छट्ठो ॥ ६ ॥ पुव्वुत्तणवविहाणं णि मेहुणं सव्वदा विवज्जंतो। इत्थिकहादिणिवित्ती सत्तमगुणबंभचारी सो ॥ ७ ॥ जं किंपि गिहारंभं बहु थोवं वा सया विवज्जेदि। आरंभणिवित्तमदी सो अट्ठमसावओ भणिओ ॥ ८ ॥ मोत्तूण वत्थमित्तं परिग्गहं जो विवज्जदे सेसं। तत्थ वि मुच्छं ण करदि वियाण सो सावओ णवमो ॥ ९ ॥ पुट्ठो वा पुट्ठो वा णियगेहिं परेहिं सग्गिहकज्जे। अणुमणणं जो ण कुणदि वियाण सो सावओ दसमो ॥१०॥ णवकोडीसु विसुद्धं भिक्खायरणेण भुंजदे भुंजं। जायणरहियं जोग्गं एयारस सावओ सो दु ॥ ११ ॥ एयारसम्मि ठाणे उक्किट्ठो सावओ हवे दुविहो। वत्थेयधरो पढमो कोवीणपरिग्गहो विदिओ ॥ १२ ॥ तववयणियमावासयलोच कारेदि पिच्छ गिण्हेदि। अणुवेहाधम्मझाणं करपत्ते एयठाणम्मि ॥ १३ ॥

इत्थ मे जो कोई देवसिओ अइचारो अणाचारो तस्स भंते! पडिक्कमामि पडिक्कमंतस्स मे सम्मत्तमरणं समाहिमरणं पंडियमरणं वीरियमरणं दुक्खक्खओ कम्मक्खओ बोहिलाहो सुगइगमणं समाहिमरणं जिणगुण-

संपत्ति होउ मज्झं ।

दंसणवयसामाइयपोसहसच्चित्तरायभत्ते य ।

बंभारंभपरिग्गहअणुमणुमुद्दिट्ठ देसविरदेदे ॥ १ ॥

एयासु जधाकहिदपडिमासु पमादाइकयाइचारसोहणट्ठं छेदोवट्ठावणं होदु मज्झ ।

---

## प्रतिक्रमणभक्तिः--

श्रीपडिक्कमणभक्ति काउस्सग्गं करेमि-

णमो अरहंताणमित्यादि-थोस्सामीत्यादि ।

णमो अरहंताणं णमो सिद्धाणं णमो आइरियाणं ।

णमो उवज्झायाणं णमो लोए सव्वसाहूणं ॥ २ ॥

णमो जिणाणं ३, णमो णिस्सहीए ३, णमोत्थु दे ३, अरहंत ! सिद्ध ! बुद्ध ! णीरय ! णिम्मल ! समसण ! सुभमण ! सुसमत्थ ! समजोग ! समभाव ! सल्लघट्टाणं ! सल्लघत्ताण ! णिब्भय ! णिराय ! णिद्दोस ! णिम्मोह ! णिम्मम ! णिस्संग ! णिस्सल ! माणमायमोसमूरण ! तवप्पहावण ! गुणरयण ! सीलसायर ! अणंत ! अप्पमेय ! महदिमहावीरवड्ढमाण ! बुद्धिरिसिणो चेदि णमोत्थु दे णमोत्थु दे णमोत्थु दे ।

मम मङ्गलं अरहंता य सिद्धा य बुद्धा य जिणा य केवलिणो ओहिओहिणाणिणो मणपज्जयणाणिणो चउदसपुव्वंगामिणो सुदसमिदिसमिद्धा य, तवो य बारसविहो तवसी, गुणा य गुणवंतो य महारिसी तित्थं तित्थकरा य, पवयणं पवणी य, णाण णाणी य, दसणं दसणी य, संजमो संजदा य, विणओ विणीदा य, बंभचेरवासो बंभचारी य, गुत्तीओ चेव गुत्तिमंतो य, मुत्तीओ चेव मुत्तिमंतो य, समिदीओ चेव समिदिमंतो य, ससमयपरसमयविदू, खंति खवगा य, खीणमोहा य खीणवंतो य, बोहियबुद्धा य बुद्धिमंतो य, चेईयरुक्खाय चेईयाणि ।

उड्ढमहतिरियलोए सिद्धायदणाणि णमंसामि सिद्धिणिसीहियाओ अट्ठावयव्वे य सम्मेदे उज्जंते चंपाये पावाए मज्झिमाए हत्थिवालियसहाए

जाओ अपणाओ का वि णिसीहियाओ जीवलोयम्मि ईसिपब्भारतलगयाणं सिद्धाणं वुद्धाण कम्मचक्कमुक्काणं णीरयाणं णिम्मलाण गुरुआइरियउवज्झायाण पव्व-तित्थेर-कुलयराणं चाउवण्णाय समणसंघा य भरहेरावएसु दससु पंचसु महाविदेहेसु जे लोए संति साहवो संजदा तवसी एदे मम मगलं पवित्त एदे ह मगल करेमि भावदो विसुद्धो सिरसा अहिवंदिऊण सिद्धे काऊण मजलिमत्थयंमि पडिलेहिय अट्ठकत्तरिओ तिविहं तियरणसुद्धो।

पडिक्कमामि भंते ! दंसणपडिमाए संकाए कंखाए विदिगिंछाए परपासंडाण पसंसाए पसंथुए जो मए देवसिओ अइचारो मणसा वचिया काएण कदो वा कारिदो वा कीरंतो वा समणुमण्णिदो तस्स मिच्छा मे दुक्कड ॥ १ ॥

पडिक्कमामि भंते ! वदपडिमाए पढमे थूलयडे हिंसाविरदिवदे वहेण वा वधेण वा छेएण वा अइभारारोहणेण वा अण्णपाणणिरोहणेण वा जो मए देवसिओ अइचारो मणसा वचिया काएण कदो वा कारिदो वा कीरंतो वा समणुमण्णिदो तस्स मिच्छा मे दुक्कडं ॥ २-१ ॥

पडिक्कमामि भंते ! वदपडिआए विदिए थूलयडे असच्चविरदिवदे मिच्छोवदेसेण वा रहोअब्भक्खाणेण वा कूडलेहणकरणेण वा णायापहारेण वा सायारमंत्रभेएण वा जो मए देवसिओ अइचारो मणसा वचिया काएण कदो वा कारिदो वा कीरंतो वा समणुमण्णिदो तस्स मिच्छा मे दुक्कडं ॥ २-२ ॥

पडिक्कमामि भंते ! वदपडिमाए तिदिए थूलयडे थेणविरदिवदे थेणपओगेण वा थेणहरियादाणेण वा विरुद्धरज्जाइक्कमणेण वा हीणाहियमाणुम्माणेण वा पडिरूवयववहारेण वा जो मए देवसिओ अइचारो मणसा वचिया काएण कदो वा कारिदो वा कीरंतो वा समणुमण्णिदो तस्स मिच्छा मे दुक्कडं ॥ २-३ ॥

पडिक्कमामि भंते ! वदपडिमाए चउत्थे थूलयडे अबंभविरदिवदे परविवाहकरणेण वा इत्तरियागमणेण वा परिग्गहिदापरिग्गहिदागमणेण वा अणगकीडणेण वा कामतिव्वाभिणिवेसेण वा जो मए देवसिओ अइ

चारो मणसा वच्चिया काएण कदो वा कारिदो वा कीरंतो वा समणुमण्णिदो तस्स मिच्छा मे दुक्कडं ॥ २-४ ॥

पडिक्कमामि भंते ! वदपडिमाए पंचमे थूलयडे परिग्गहपरिमाणवदे खेत्तवत्थूण परिमाणाइक्कमणेण वा धणधाणाणं परिमाणाइक्कमणेण वा दासीदासाणं परिमाणाइक्कमणेण वा हिरण्णसुवण्णाणं परिमाणाइक्कमणेण वा कुप्पभांडपरिमाणाइक्कमणेण वा जो मए देवसिओ अइचारो मणसा वच्चिया काएण कदो वा कारिदो वा कीरंतो वा समणुमण्णिदो तस्स मिच्छा मे दुक्कडं ॥२-५॥

पडिक्कमामि भंते ! वदपडिमाए पढमे गुणव्वदे उड्ढवइक्कमणेण वा अहोवइक्कमणेण वा वातिरियवइक्कमणेण वा खेत्तउड्ढीएण वा सदिअंतराधाणेण वा जो मए देवसिओ अइचारो मणसा वच्चिया काएण कदो वा कारिदो वा कीरंतो वा समणुमण्णिदो तस्स मिच्छा मे दुक्कडं ॥२-६-१॥

पडिक्कमामि भंते ! वदपडिमाए विदिए गुणव्वदे आणयणेण वा विणिजोगेण वा सद्दाणुवाएण वा रूवाणुवाएण वा पुग्गलखेवेण वा जो मए देवसिओ अइचारो मणसा वच्चिया काएण कदो वा कारिदो वा कीरंतो वा समणुमण्णिदो तस्स मिच्छा मे दुक्कडं ॥ २-७-२ ॥

पडिक्कमामि भंते ! वदपडिमाए तिदिए गुणव्वदे कंदप्पेण वा कुकुवेएण वा मोक्खरिएण वा असमक्खियाहिकरणेण वा भोगोपभोगाणत्थकेण वा जो मए देवसिओ अइचारो मणसा वच्चिया काएण कदो वा कारिदो वा कीरंतो वा समणुमण्णिदो तस्स मिच्छा मे दुक्कडं ॥ २-८-३ ॥

पडिक्कमामि भंते ! वदपडिमाए पढमे सिक्खावदे फासिंदियभोगपरिमाणाइक्कमणेण वा रसणिंदियभोगपरिणाइक्कमणेण वा घाणिंदियभोगपरिमाणाइक्कमणेण वा सवणिंदियभोगपरिमाणाइक्कमणेण वा जो मए देवसिओ अइचारो मणसा वच्चिया काएण कदो वा कारिदो वा कीरंतो वा समणुमण्णिदो तस्स मिच्छा मे दुक्कड ॥ २-९-१ ॥

पडिक्कमामि भंते ! वदपडियाए विदिए सिक्खावदे फासिंदियपरिभोगपरिमाणाइक्कमणेण वा रसणिंदियपरिभोगपरिमाणाइक्कमणेण वा घाणिंदियपरिभोगपरमाणाइक्कमणेण वा चक्खिंदियपरिभोगपरिमाणा-

इक्कमणेण वा सवणिंदियपरिभोगपरिमाणाइक्कमणेण वा जो मए देव-सिओ अइचारो मणसा वचिया काएण कदो वा कारिदो वा कीरंतो वा समणुमण्णिदो तस्स मिच्छा मे दुक्कडं ॥ २-१०-२ ॥

पडिक्कमामि भंते ! वदपडिमाए तिदिए सिक्खावदे सचित्तणिक्खेवेण वा सचित्तापिहाणेण वा परउवएसेण वा कालाइक्कमणेण वा मच्छरिएण वा जो मए देवसिओ अइचारो मणसा वचिया काएण कदो वा कारिदो वा कीरंतो वा समणुमण्णिदो तस्स मिच्छा मे दुक्कड ॥२-११-३॥

पडिक्कमामि भंते ! वदपडिमाए चउत्थे सिक्खावदे जीविदासंसणेण वा मरणासंसणेण वा मित्ताणुराएण वा सुहाणुबंधेण वा णिदाणेण वा जो मए देवसिओ अइचारो मणसा वचिया काएण कदो वा कारिदो वा कीरंतो वा समणुमण्णिदो तस्स मिच्छा मे दुक्कड ॥ २-१२-४ ॥

पडिक्कमामि भंते ! सामाइयपडिमाए मणदुप्पणिधाणेण वा वायदुप्पणिधाणेण वा कायदुप्पणिधाणेण वा अणादरेण वा सदिअणुवट्ठावणेण वा जो मए देवसिओ अइचारो मणसा वचिया काएण कदो वा कारिदो वा कीरंतो वा समणुमण्णिदो तस्स मिच्छा मे दुक्कडं ॥ ३ ॥

पडिकमामि भंते ! पोसहपडिमाए अप्पडिवेक्खियापमज्जियोस्सग्गेण वा अप्पडिवेक्खियापमज्जियादाणेण वा अप्पडिवेक्खियापमज्जियासंथारोवक्कमणेण वा आवस्सयाणादरेण वा सदिअणुवट्ठावणेण वा जो मए देवसिओ अइचारो मणसा वचिया काएण कदो वा कारिदो वा कीरंतो वा समणुमण्णिदो तस्स मिच्छा मे दुक्कडं ॥ ४ ॥

पडिक्कमामि भंते ! सचित्तविरदिपडिमाए पुढविकाइया जीवा असंखेज्जासंखेज्जा आउकाइया जीवा असंखेज्जासंखेज्जा तेउकाइया जीवा असंखेज्जासंखेज्जा वाउकाइया जीवा असंखेज्जासंखेज्जा वणप्फदिकाइया जीवा अणंताअणंता हरिया वीया अंकुरा छिण्णा भिण्णा एदेसिं उद्दावणं परिदावणं विराहणं उवघादो कदो वा कारिदो वा कीरंतो वा समणुमण्णिदो तस्स मिच्छा मे दुक्कडं ॥ ५ ॥

पडिक्कमामि भंते ! रायभत्तपडिमाए णवविहबंभचरियस्स दिवा

जो मये देवसिओ अइचारो अणाचारो मणसा वचिया काएण कदो वा कारिदो वा कीरंतो वा समणुमण्णिदो तस्स मिच्छा मे दुक्कडं ॥६॥

पडिक्कमामि भंते ! वभपडिमाए इत्थिकहायत्तणेण वा इत्थिमणोहररंगणिरक्खणेणवा पुव्वरयाणुस्सरणेण वा कामकोवणरसासेवणेण वा सरीरमंडणेण वा जो मए देवसिओ अइचारो अणाचारो मणसा वचिया काएण कदो वा कारिदो वा कीरंतो वा समणुमण्णिदो तस्स मिच्छा मे दुक्कड ॥७॥

पडिक्कमामि भंते ! आरंभविरदिपडिमाए कसायवसंगएण जो मए देवसियो आरंभो मणसा वचिया काएण कदो वा कारिदो वा कीरंतो वा समणुमणिणदो तस्स मिच्छा मे दुक्कडं ॥८॥

पडिक्कमामि भंते ! परिग्गहविरदिपडिमाए वत्थमेत्तपरिग्गहादो अवरम्मि परिग्गहे मुच्छापरिणामे जो मए देवसिओ अइचारो अणाचारो कदो वा कारिदो वा कीरंतो वा समणुमण्णिदो तस्स मिच्छा मे दुक्कडं॥९॥

पडिक्कमामि भंते ! अणुमणुविरदिपडिमाए जं किं पि अणुमणणं पुट्ठापुट्ठेण कद वा कारिदं वा कीरंतं वा समणुमण्णिदो तस्स मिच्छा मे दुक्कडं ॥१०॥

पडिक्कमामि भंते ! उद्दिट्ठविरदिपडिमाए उद्दिट्ठदोसवहुलं अहोरदियं आहारयं अहारदियं आहारिज्जंतं वा समणुमण्णिदो तस्स मिच्छा मे दुक्कड ॥११॥

इच्छामि भंते ! इम णिग्गथ पावयणं अणुत्तरं केवलय पडिपुण्णं णेगाइय सामाइय संसुद्ध सल्लघट्टाण सल्लघत्ताणं सिद्धिमाग्गं सेढिमग्गं खंतिमग्गं मोत्तिमग्ग पमोत्तिमग्गं मोक्खमग्ग पमोक्खमग्गं णिज्जाणमग्गं णिव्वाणमग्ग सव्वदुक्खपरिहाणिमग्गं सुचरियपरिणिव्वाणमग्गं अवितहमविसंतिपव्वयणमुत्तमं त सद्दहामि त पत्तियामि त रोचेमि तं फासेमि इदो उत्तरं अण्ण णत्थि भूदं ण भयं ण भविस्सदि णाणेण वा दसणेण वा चरित्तेण वा सुत्तेण वा इदो जीवा सिज्झति वुज्झति मुच्चंति परिणिव्वाणयंति सव्वदुक्खाणमंतं करंति परिवियाणंति समणोमि संजदोमि उवरदोमि

उवसंतोमि उवधिणियडियमाणमायामोसमूरणा मिच्छणाणमिच्छदंसणमिच्छ-चरित्तं च पडिविरदोमि सम्मणाणसम्मदंसणसम्मचरित्तं च रोचेमि जं जिण-वरेहिं पण्णत्तो इत्थ मे जो कोइ देवसिओ अइचारो अणाचारो तस्स मिच्छा मि दुक्कडं ।

---

इच्छामि भंते ! वीरभत्तिकाउस्सग्गं करेमि जो मए देवसिओ अइ-चारो अणाचारो आभोगो अणाभोगो काइयो वाइयो माणसिओ दुच्चरिओ दुच्चारिओ दुब्भासिओ दुप्परिणामिओ णाणे दसणे चरित्ते सुत्ते सामाइए एयारसण्हं पडिमाणं विराहणाए अट्ठविहस्स कम्मस्स णिग्घादणाए अण्णहा उस्सासिदेण णिस्सासिदेण वा उम्मिसिदेण णिम्मिस्सिदेण खासिदेण वा छिंकिदेण वा जंभाइदेण वा सुहुमेहिं अंगचलाचलेहिं दिट्ठिचलाचलेहिं एदेहिं सव्वेहिं असमाहिं पत्तेहिं आयारेहिं जाव अरहंताणं भयवंताणं पज्जु-वासं करेमि ताव कायं पाव कम्मं दुच्चरियं वोस्सरामि ।

दंसणवयसामाइयपोसहसच्चित्तराइभत्ते य ।
बंभारंभपरिग्गहअणुमणुमुद्दिट्ठदेसविरदेदे ॥ १ ॥

---

वीरभत्तिकाउस्सग्गं करेमि---

( णमो अरहंताणमित्यादि, थोस्सामीत्यादि जाप्य ३६ देवा ) ।

यः सर्वाणि चराचराणि विधिवद्द्रव्याणि तेषां गुणान् पर्यायानपि भूतभाविभवतः सर्वान् सदा सर्वदा । जानीते युगपत्प्रतिक्षणमतः सर्वज्ञ इत्युच्यते सर्वज्ञाय जिनेश्वराय महते वीराय तस्मै नमः ॥ १ ॥ वीरः सर्व-सुरासुरेन्द्रमहितो वीरं बुधाः संश्रिता वीरेणाभिहतः स्वकर्मनिचयो वीराय भक्त्या नमः वीरात्तीर्थमिदं प्रवृत्तमतुलं वीरस्य वीरं तपो वीरे श्री-द्युति-कांति-कीर्ति-धृतयो हे वीर ! भद्रं त्वयि ॥ २ ॥ ये वीरमादौ प्रणमंति नित्यं ध्यानास्थिताः संयमयोगयुक्ताः । ते वीतशोका हि भवन्ति लोके संसारदुर्गं विषमं तरंति ॥ ३ ॥ व्रतसमुदयमूलः संयमस्कन्धबन्धो यमनियमपयोभि-र्वर्धितः शीलशाखः । समितिकलिकभारो गुप्तिगुप्तप्रवालो गुणकुसुमसुगंधिः

सत्तपश्चित्रपत्रः ॥ ४ ॥ शिवसुखफलदायी यो दयाछाययोघः शुभजन-पथिकानां खेदनोदे समर्थः । दुरितरविजताप प्रापयन्नन्तभावं स भवविभवहान्यैनोऽस्तु चारित्रवृत्तः ॥ ५ ॥ चारित्र सर्वजिनैश्चरितं प्रोक्तं च सर्वशिष्येभ्यः । प्रणमामि पचभेदं पचमचारित्रलाभाय ॥ ५ ॥ धर्मः सर्व-सुखाकरो हितकरो धर्मं वुधाश्चिन्वते धर्मेणैव समाप्यते शिवसुखं धर्माय तस्मै नमः। धर्मान्नास्त्यपरः सुहृद्भवभृतां धर्मस्य मूल दया धर्मे चित्त-महं दधे प्रतिदिन हे धर्म ! मा पालय ॥ ७ ॥ धम्मो मगलमुद्दिट्ठं अहिंसा संयमो तवो । देवा वि तस्म पणमति जस्स धम्मे सया मणो ॥ ८ ॥

इच्छामि भंते ! पडिकमणाइचारमालोचेउं तत्थ देसासिआ आसणा-सिआ ठाणासिआ कालासिआ मुद्दासिआ काओसग्गासिआ पणमासिआ आवत्तासिआ पडिक्कमासिए छसु आवासएसु परिहीणदा जो मए अच्चा-सणा मणसा वचिया काएण कदो वा कारिदो वा कीरंतो वा समणुम-ण्णिदो तस्स मिच्छा मि दुक्कडं ।

दसण-वय सामाइय-पोसह-सच्चित्त-रायभत्ते य ।
वंभारंभ परिग्गह-अणुमणमुद्दिट्ठ देसविरदो य ॥ १ ॥

---

चउवीसतित्थयरभत्तिकाउस्सग्गं करेमि--

( णमो अरहताणमित्यादि, थोस्सामीत्यादि )

चउवीसं तित्थयरे उसहाइवीरपच्छिमे वंदे । सव्वेसिं गुणगणहरसिद्धे सिरसा णमंसामि ॥१॥ ये लोकेष्टसहस्रलक्षणधरा ज्ञेयार्णवान्तर्गता ये सम्य-कभवजालहेतुमथनाश्चन्दार्कतेजोधिकाः । ये साध्विन्द्रसुराप्सरोगणशतै-र्गीतप्रणुत्यार्चिता-स्तान् देवान् वृभादिवीरचरमान् भक्त्या नमस्याम्यहम् ॥ २ ॥ नाभेय देवपूज्यं जिनवरमजित सर्वलोकप्रदीपं सर्वज्ञं संभवाख्यं मुनिगणवृपभं नन्दनं देवदेवम् । कर्मारिघ्नं सुवुद्धिं वरकमलनिभ पद्मपुष्पा-भिगन्धं क्षान्त दान्तं सुपार्श्वं सकलशशिनिभं चन्द्रनामानमीडे ॥ ३ ॥ विख्यात पुष्पदन्त भवभयमथनं शीतलं लोकनाथं श्रेयांसं शीलकोश प्रव-रनरगुरु वासुपूज्यं सुपूज्यम्। मुक्तं दान्तेन्द्रियाश्व विमलमृपिपतिं सिंह-

सैन्यं मुनीन्द्रं धर्म सद्धर्मकेतुं शमदमनिलयं स्तौमि शांतिं शरण्यम् ॥४॥ कुन्थुं सिद्धालयस्थ श्रमणपतिमरं त्यक्तभोगेषु चक्रं मल्लिं विख्यातगोत्र खचरगणनुतं सुव्रतं सौख्यराशिम् । देवेन्द्राच्यं नमीश हरिकुलतिलक नेमिचन्द्र भवान्त पार्श्वं नागेन्द्रवन्द्य शरणमहमितो वर्धमानं च भक्त्या॥५॥

## अंचलिका----

इच्छामि भंते ! चउवीसतित्थयरभत्तिकाउस्सग्गो कओ तस्सालोचेउ पञ्चमहाकल्लाणसंपण्णाणं अट्ठमहापाडिहेरसहिदाणं चउतीसातिसयविसेस-संजुत्ताणं बत्तीसदेविंदमणिमउडमत्थयमहिदाण बलदेव-वासुदेव-चक्कहर-रिसिमुणिजइअणगारोवगूढाणं थुइसहस्सणिलयाण उसहाइवीरपच्छिममङ्ग-लमहापुरिसाण णिच्चकालं अंचेमि पूजेमि वंदामि णमंसामि दुक्खक्खओ कम्मक्खओ बोहिलाहो सुगइगमण समाहिमरण जिणगुणसंपत्ति होउ मज्झं ।

दसण-वय सामाइय-पोसह-सचित्त-रायत्ते य ।
बंभारंभ-परिग्गह-अणुमणमुद्दिट्ठ देसविरदो ॥ १ ॥

---

श्रीसिद्धभक्ति-श्रीप्रतिक्रमणभक्ति-श्रीवीरभक्ति-श्रीचतुर्विंशतिभक्तीः कृत्वा तद्धीनाधिकत्वादिदोषविशुद्धयर्थं समाधिभक्ति कायोत्सर्गं करोम्यहं—

( णमोकार ९ गुणिवा )

अथेष्टप्रार्थना प्रथमं करण चरण द्रव्य नमः शास्त्राभ्यासो जिनपति-नुतिः संगतिः सर्वदार्यैः सद्वृत्तानां गुणगणकथा दोषवादे च मौनम् । सर्वस्यापि प्रियहितवचो भावना चात्मतत्वे सम्पद्यन्तां मम भवभवे याव-देतेऽपवर्गः ॥ १ ॥ तव पादौ मम हृदये मम हृदय तव पदद्वये लीनं । तिष्ठतु जिनेन्द्र ! तावद्यावन्निर्वाणसम्प्राप्तिः ॥ २ ॥ अक्खरपयत्थहीण मत्ताहीण च जं भए भणियं । तं खमउ णाणदेव य मज्झ वि दुक्खक्खयं दिंतु ॥ ३ ॥ दुक्खक्खओ कम्मक्खओ बोहिलाहो सुगइगमण समाहि-मरण जिणगुणसंपत्ति होउ मज्झं ।

इति श्रीश्रावकप्रतिक्रमण समाप्तम् ।

# दीक्षा-नक्षत्राणि

प्रणम्य शिरसा वीरं जिनेन्द्रममलव्रतम् । दीक्षा ऋक्षाणि वक्ष्यन्ते सतां शुभफलाप्तये ॥ १ ॥ भरण्युत्तरफाल्गुन्यौ मघाचित्राविशखिकाः । पूर्वाभाद्रपदा भानि रेवती मुनि-दीक्षणे ॥ २ ॥ रोहिणी चोत्तराषाढा उत्तराभाद्रपत्तथा । स्वातिः कृत्तिकया सार्धं वर्ज्जते मुनिदीक्षणे ॥ ३ ॥ अश्विनी-पूर्वाफाल्गुन्यौ हस्तस्वात्यनुराधिकाः । मूलं तथोत्तराषाढा श्रवणः शतभिषक्तथा ॥ ४ ॥ उत्तराभाद्रपच्चापि दशेति विशदाशयाः । अर्यिकाणां व्रते योग्यान्युपन्ति शुभहेतवः ॥ ५ ॥ भरण्यां कृत्तिकायां च पुष्पे श्लेषार्द्रयोस्तथा । पुनर्वसो च नो दद्युरार्यिकाव्रतमुत्तमाः ॥ ६ ॥ पूर्वाभाद्रपदा मूल धनिष्ठा च विशाखिका । श्रवणश्चैषु दीक्ष्यन्ते क्षुल्लकाः शल्यवर्जिताः ॥ ७ ॥

इति दीक्षानक्षत्रपटलम्

—*—

# दीक्षा ग्रहणक्रिया

सिद्धयोगिबृहद्भक्तिपूर्वकं लिङ्गमर्प्यताम् ।
लुञ्चाख्यानाग्न्यपिच्छात्म क्षम्यतां सिद्धभक्तितः ॥

अथदीक्षाग्रहण क्रियायां .... सिद्धभक्तिकायोत्सर्गं करोमिः—

( 'सिद्धानुद्धूत' इत्यादि )

अथ दीक्षाग्रहण क्रियायां ....... योगिभक्तिकायोत्सर्गं करोमि ( थोस्सामि गुणधराणां इत्यादि जातिजरोरूरोग इत्यादि वा ) अनन्तरं लोचकरण, नामकरण, नाग्न्यप्रदानं, पिच्छप्रदानं च अथ दीक्षा निष्ठापनक्रियाया .....सिद्धभक्ति कायोत्सर्गं करोमि ।

दीक्षादानोत्तरकर्त्तव्यम्—

व्रतसमितीन्द्रियरोधाः पंच पृथक क्षितिशयो रदाघर्षः ।
स्थितिसकृदशने लुञ्चवश्यकषट्के विचेलताऽस्नानम् ॥

इत्यष्टविंशति मूलगुणान् निक्षप्य दीक्षिते।
संक्षेपेण सशीलादीन् गणी कुर्यात्प्रतिक्रमम् ॥

## लोचक्रिया

लोचो द्वित्रिचतुर्मासैर्वरो मध्योऽधमः क्रमात्।
लघु प्राग्भक्तिः कार्यः सोपवास प्रतिक्रमः ॥

अथ लोच प्रतिष्ठापनक्रियायां····· सिद्धभक्तिकायोत्सर्गं करोमि–
('तवसिद्धे' इत्यादि)

अथ लोच प्रतिष्ठापनक्रियायां······योगिभक्तिकायोत्सर्गं करोमि अनन्तरं स्वहस्तेन परहस्तेनापि वा लोचः कार्यः।

अथ लोच-निष्ठापनक्रियाया·····सिद्धभक्तिकायोत्सर्गं करोमि ('तवसिद्धे' इत्यादि) अनन्तरं प्रतिक्रमणं कर्तव्यम्।

## बृहद्दीक्षाविधिः

पूर्वदिने भोजनसमये भाजनतिरस्कारविधिं विधाय आहारं गृहीत्वा चैत्यालये आगच्छेत्। ततो बृहत्प्रत्याख्यानप्रतिष्ठापने सिद्धयोगभक्तिं पठित्वा गुरुपार्श्वे प्रत्याख्यान सोपवासं गृहीत्वा आचार्य-शांति समाधि-भक्तीः पठित्वा गेरोः प्रणामं कुर्यात्।

अथ दीक्षादाने दीक्षादातृजनाशांतिक-गणधरवलयपूजादिकं यथाशक्ति कारयेत्। अथ दाता तं स्नानादिकं कारयित्वा यथायोग्यालङ्कार-युक्तं महामहोत्सवेन चैत्यालये समानयेत्। स देवशास्त्र-गुरूपूजां विधाय वैराग्यभावनापरः सर्वैः सह क्षयां कृत्वा गुरोरग्रेनिष्ठत्।

ततो गुरोरग्रे संघस्याग्रे दीक्षायै च यांचां कृत्वा तदाज्ञया सौभाग्यवती–स्त्री-विहितस्वस्तिकोपरि श्वेतवस्त्र प्रच्छाद्य तत्र पूर्वदिशाभिमुखः पर्यंकासनं कृत्वा आसते गुरुश्चोत्तराभिमुखो भूत्वा संघाष्टकं संघं च परिपृच्छय लोचं कुर्यात्।

अथ तद्विधिः--

बृहद्दीक्षायां लोचस्वीकारक्रियाया पूर्वाचार्येत्यादिकमुच्चार्य सिद्ध-योगि-भक्ति कृत्वा—

ॐनमोऽर्हते भगवते प्रक्षीणाशेषकल्मषाय दिव्यतेजोमूर्तये श्रीशांति-नाथाय शांतिकराय सर्वविघ्नप्रणाशनाय सर्वरोगापमृत्युविनाशनाय सर्व-परकृतक्षुद्रोपद्रवविनाशनाय सर्वक्षामडामरविनाशाय ओ ह्रां ह्रीं ह्रूं ह्रौं ह्रः अ सि आ उ सा अमुकस्य सर्व शांतिं कुरु कुरु स्वाहा।

इत्येनेन मंत्रेण गन्धोदकादिक त्रिवारं मंत्रयित्वा शिरसि निक्षिपेत्। शांतिमंत्रेण गधोदकं त्रिः परिषिंच्य मस्तकं वामहस्तेन स्पृशेत्। ततो दध्यक्षतगोमयदूर्वा कुरान् मस्तके वर्धमानमंत्रेण निक्षिपेत्–

ॐ नमो भयवदोवड्ढमाणस्स रिसहस्स चक्कं जलंतं गच्छइ आयासं पायाल लोयाणं भूयाण जये वा विवादे वा थंभणे वा रणगणे वा राय-गणे वा मोहण वा सव्वजीवसन्ताणं अपराजिदो भवदु भवदे रक्ख रक्ख स्वाहा वर्धमान मंत्रः।

ततः पवित्रभस्मपात्र गृहीत्वा "ओं णमो अरहंताणं रत्नत्रयपविमिक्-चोत्तमांगाय ज्योतिर्मयाय मतिश्रुतावधिमनः पर्ययकेवलज्ञानाय असि आउसा स्वाहा" इदं मंत्र पठित्वा शिरसि कर्पूर मिश्रितं भस्म परिक्षिप्य "ओं ह्रीं श्रीं क्लीं ऐं अर्हं अ सि आ उ सा स्वाहा अनेन प्रथमं केशोत्पाटन कृत्वा पश्चात् "ओं ह्रां अर्हद्भ्यो नमः, ओं ह्रीं सिद्धेभ्यो नमः, ओं ह्रूं सूरिभ्यो नमः, ओं ह्रौं पाठकेभ्यो नमः, ओं ह्रः सर्वसाधुभ्यो नमः" इत्युच्चरन् गुरुः स्वहस्तेन पंचवारान् केशान् उत्पाटयेत्। पश्चादन्यः कोऽपि लोचावसाने बृहद्दी-क्षायां लोचनिष्ठापनक्रियाया पूर्वाचार्येत्यादिक पठित्वा सिद्धभक्ति (क्तिं) कर्तव्या ( कुर्यात् ) ततः शीर्ष प्रक्षाल्य गुरुभक्ति कृत्वा वस्त्राभरणयज्ञो-पवीतादिकं परित्यज्य तत्रैवावस्थाप्य दीक्षा याचयेत्। ततो गुरुः शिरसि श्रीकारं लिखित्वा "ओं ह्रीं अर्हं अ सि आ उ सा ह्रीं स्वाहा" अनेन १०८ मंत्रेण जाप्यं दद्यात्। ततो गुरुस्तस्याजलौ केशरकर्पूरश्रीखंडेन श्रीकरं कुर्यात्।

श्रीकारस्य चतुर्दिक्षु—

रयणत्तयं च वंदे चउवीसजिणं तहा वंदे ।
पचगुरूणं वंदे चारणजुगलं तहा वंदे ॥

इति पठन् अंकान् लिखेत् । पूर्वे ३ दक्षिणे २४ पश्चिमे ५ उत्तरे २ इति लिखित्वा "सम्यगदर्शनाय नमः सम्यक्चारित्राय नमः" इति पठन् तन्दुलैरञ्जलिं पूर्यत्तदुपरि नालिकेरं पूगीफल च धृत्वा सिद्धचारित्रयोगिभक्तिं पठित्वा व्रतादिकं दद्यात् ।

तथा हि—

वदसमिदिंयरोधो लोचो, आवासयमचेलमण्हाणं ।
खिदिसयणमदंतवणं ठिदिभोयणमेयभत्तं च ॥ २ ॥

इति पठित्वा तदुव्याख्या विधेया कालानुसारेणेति निरूप्य पचमहाव्रत-पंचसमित्यादि पठित्वा सम्यक्त्वपूर्वकं दृढव्रत सुव्रतं समारूढ ते भवतु इति त्रीनवारान् उच्चार्य व्रतानि दत्त्वा तथा शांतिभक्तिं पठेत् । ततः आशोः श्लोक पठित्वा अंजलिस्थं तन्दुलादिक दात्रे दापयित्वा अथ षोडशसंस्कारारोपणं—

अयं सम्यग्दर्शनसंस्कार इह मुनौ स्फुरतु ॥ १ ॥
अयं सम्यग्ज्ञानसंस्कार इह मुनौ स्फुरतु ॥ २ ॥
अय सम्यक्चारित्रसंस्कार इह मुनौ स्फुरतु ॥ ३ ॥
अय बाह्याभ्यतरतपःसंस्कार इह मुनौ स्फुरतु ॥४॥
अयं चतुरगवीर्यसंस्कार इह मुनौ स्फुरतु ॥ ५ ॥
अयं अष्टमातृमंडलसंस्कार इह मुनौ स्फुरतु ॥ ६ ॥
अयं शुद्ध्यष्टकावष्टंभसंस्कार इह मुनौ स्फुरतु ॥ ७ ॥
अयं अशेषपरीषहजयसंस्कार इह मुनौ स्फुरतु ॥ ८ ॥
अयं त्रियोगसंगमनिवृत्तिशीलतासंस्कार इह मुनौ स्फुरतु ॥ ९ ॥
अयं त्रिकरणसंयमनिवृत्तिशीलतासंस्कार इह मुनौ स्फुरतु ॥ १० ॥
अयं दशासंयमनिवृत्तिशीलतासंस्कार इह मुनौ स्फुरतु ॥ ११ ॥
अयं चतुःसंज्ञानिग्रहशीलतासंस्कार इह मुनौ स्फुरतु ॥ १२ ॥

अयं पंचेंद्रियजयशीलतासंस्कार इह मुनौ स्फुरतु ॥ १३ ॥
अयं दशधर्मधारणशीलतासंस्कार इह मुनौ स्फुरतु ॥ १४ ॥
अयं मष्टादशसहस्रशीलतासंस्कार इह मुनौ स्फुरतु ॥ १५ ॥
अयं चतुरशीतिलक्षणसंस्कार इह मुनौ स्फुरतु ॥ १६ ॥

इति प्रत्येकमुच्चार्य शिरसि लवंगपुष्पाणि क्षिपेत 'णमो अरहंताणं' इत्यादि ओ परमहंसाय परिमेष्ठिने हंस ह्स ह्रं ह्र। ह्रं ह्रौं ह्रीं ह्रै ह्रः जिनाय नमः जिन स्थापयामि संवौषट् ऋषिमस्तके न्यसेत् अथ गुर्वावली पठित्वा अमुकस्य अमुकनामा त्वं शिष्य इति कथयित्वा संयमाद्युपकरणानि दद्यात्।

णमो अरहंताणं भो अन्तेवासिन्! षड्जीवनिकायरक्षणाय मार्दनादि-गुणोपेतमिद पिच्छिकोंपकरणं गृहाण गृहाणेति ।

ओं णमो अरहंताणं मतिश्रुतावधिमनःपर्ययकेवलज्ञानाय द्वादशांग-श्रुताय नमः भो अन्तेवासिन् । इदं ज्ञानोपकरणं गृहाण गृहाणेति ।

कमंडलु वामहस्तेन उद्धृत्य ओं णमो अरहंताणं रत्नत्रयपवित्रकरणाय बाह्याभ्यंतरमलशुद्धाय नमः भो अन्तेवासिन् ! इद शौचोपकरणं गृहाण गृहाणेति ।

तत्पश्चात् समाधि-भक्ति पठेत् । ततो नवदीक्षितो मुनिर्भक्त्या गुरुं प्रणम्य अन्यान् मुनीन् प्रणम्योपविशतियावद् व्रतारोपणं न भवति ताव-दन्ये मुनयः प्रतिवन्दना न ददति ततो दातृप्रमुखा जना उत्तमफलानि अग्रे निधाय तस्मै नमोऽस्त्वति प्रणामं कुर्वंति ।

ततस्तत्पक्षे द्वितीयपक्षे वा सुमुहूर्ते व्रतारोपणं कुर्यात् । तदा रत्न-त्रयपूजां विधाय पाक्षिकप्रतिक्रमणपाठः पठनीयः तत्र पाक्षिकनियमग्रहणसमयात पूर्वं यदा वदसमदीत्यादि पठ्यते तदा पूर्वव्रतव्रतादि दद्यात् । नियमग्रहण समय यथायोग्यं एकं तपो दद्यात् (पल्यविधानादिकम्) दातृ-प्रभृतिश्रावकेभ्योऽपि एक एक तपो दद्यात् ततोऽन्ये मुनयः प्रतिवन्दना ददति ।—

अथ मुखशुद्धि मुक्तकरणे विधिः—

त्रयो दशसु पंचसु त्रिषु वा कच्चोलिकासु लवंगएलापूगोफलादिकं

निक्षिप्य ताः कच्चोलिकाः गुरोरग्रे स्थापयेत् 'मुखशुद्धिमुक्तकरणपाठक्रिया-यामित्याद्युच्चार्य सिद्ध योगी आचार्य शांति-समाधि भक्तिर्विधाय ततः पश्चान्मुखशुद्धिं गृह्णीयात् ।

इति महाव्रतदीक्षा विधिः

# क्षुल्लक दीक्षा विधिः

अथ लघुदीक्षायां सिद्ध-योगी-शांति-समाधिभक्तीः पठेत् । "ओं ह्रीं श्रीं क्लीं ऐं अर्हं नमः" अनेन मन्त्रेण जाप्यं वार २१ अथवा १०८ दीयते ।

अन्यच्च विस्तारेण लघुदीक्षाविधिः

अथ लघुदीक्षानेतृजनः पुरुषः स्त्री वा दाता संस्थापयति । यथा-योग्यमलंकृतं कृत्वा चैत्यालये समानयेत्, देव वंदित्वा सर्वै सह क्षमां कृत्वा गुरोरग्रे च दीक्षां याचयित्वा तदाज्ञया सौभाग्यवतीस्त्री विहितस्व-स्तिकोपरि श्वेतवस्त्रं प्रच्छाद्य तत्र पूर्वाभिमुखः पर्यंकासनो गुरुश्चोत्तरा-भिमुखः संघाष्टं संघं पृच्छ्य च परिपृच्छ्य लोचं······ओं नमोऽर्हते भगवते प्रक्षीणाशेषकल्मषाय दिव्यतेजोमूर्तये शांतिनाथाय शांतिकराय सर्वविघ्नप्रणाशकाय सर्वरोगापमृत्युविनाशनाय ओं ह्रां ह्रीं ह्रूं ह्रौं ह्रः अ सि आ उ सा अमुकस्य सर्वशांतिं कुरु कुरु स्वाहा, अनेन मंत्रेण गंधोद-कादिकं त्रिवारं शिरसि निक्षिपेत् । शांतिमंत्रेणं गधोदकं पारंत्रि परिषिंच्य वामहस्तेन स्पृशेत् । ततो दध्यक्षतगोमयतन्दुल दुर्वांकुरान् मस्तके वर्धा-पनमंत्रेण निक्षिपेत् "ओं णमो भयवदो वड्ढयमाणस्सेत्यादि वर्धापनमत्रः पूर्वं कथितः । लोचादिविधि महाव्रतंव्विधाय सिद्धभक्ति योगभक्ति पठित्वाव्रतं दद्यात् ।—

दंसणवयेत्यादि वारत्रयं पठित्वा व्याख्यायां विधाय च गुर्वावलीं पठेत् । ततः संयमाद्युपकरणं दद्यात् । ओं णमो अरहंताणं भो क्षुल्लक ! (आर्ये-ऐलक) क्षुल्लके वा षट्जीवनिकायरक्षणाय मार्दवादिगुणोपेतमिदं पिच्छो-

पकरणं गृहाण गृहाण इत्यादि पूर्ववत्कमडण्लु ज्ञानोपकरणादिकं च मत्र पठित्वा दद्यात्।

इति लघुदीक्षा विधान समाप्तम्

—*—

## अथोपाध्यायदीक्षादानविधिः

शुभ मूहूर्ते दाता गणधरवलयार्चनं च कारयेत्। ततः श्रीखंडादिना छटान् दत्वा तन्दुलैः स्वस्तिकं कृत्वा तदुपरि पट्टकं संस्थाप्य तत्र पूर्वाभिमुख तमुपाध्यायपदयोग्यं मुनिमासयेत् अथोपाध्यायपदस्थापनक्रियायां पूर्वाचार्येत्याद्युच्चाय सिद्ध श्रुतभक्ति पठेत्। तत आह्वानादिमत्रानुच्चार्य शिरसि लवग पुष्पाक्षतं क्षिपेत् तद्यथा-ओं ह्रौं णमो उवज्झायाणं उपाध्यायपरमेष्ठिन्! अत्र एहि एहि संवौषट आह्वानन स्थापनं सन्निधिकरणं। ततश्च "ओं ह्रौं णमो उवज्झायाण उपाध्यायपरमेष्ठिने नमः" इमं मत्रं सहेंदुना चन्दनेन शिरसि न्यसेत। ततश्च शान्तिसमाधिभक्तीः पठत्। ततः स उपाध्यायो गुरूभक्ति दत्वा प्रणम्य दात्र आशिष दद्यादिति।

इत्युपाध्यायपदस्थानविधिः

—*—

## अथाचार्यपदास्थापनाविधिः

सुमुहूर्ते दाता शांतिकं गणधरवलयार्चनं च यथाशक्ति कारयेत्। ततः श्रीखंडादिना छटादिकं कृत्वा आचार्यपदयोग्यं मुनिमासयेत्। आचार्यपदप्रतिष्ठापनक्रियायां इत्याद्युच्चार्य सिद्धाचार्यभक्ति पठेत्। "ओं ह्रूं परमसुराभिद्रव्यसन्दर्भपरिमलगर्भतीर्थाम्बुसम्पूर्णसुवर्णकलशपचकतोयेन परिषेचयामीति स्वाहा" इति पठित्वा कलशपचकतोयेन पादौपरिसेचयेत्। ततः पंडिताचार्यो "निर्वेद सौष्ठीइत्यादि महर्षिस्तवन पठनपादौ समंतात्परामृश्य गुणारोपण कुर्यात्। ततः ओं ह्रूं णमो आइरियाणं आचार्यपरमेष्ठिन्! अत्र एहि एहि संवौषट्ट आह्वानं स्थापन सन्निधिकरणं। ततश्च "ओं ह्रूं णमो आइरियाणं धर्माचार्याधिपतये नमः" अनेन मंत्रेण

सहेन्दुना चन्दनेन पादयोर्द्वयोस्तिलक दद्यात। ततः शान्तिसमाधिभक्तिं कृत्वा गुरुभक्त्या गुरुंप्रणम्योपविशति। तत उपासकास्तस्य पादयोरष्टत-मिमिष्ठि कुर्वंति। यतयश्चै गुरुभक्तिं दत्वा प्रणमंति। स उपाककेभ्य आशीर्वादं दद्यात्।

इत्याचार्यपददानविधिः

ओं ह्रां ह्रीं श्रीं अर्हं हं सः आचार्यायनमः आचार्यवचनमंत्रः अन्यच्च-
ओं ह्रीं श्रीं अर्हं हं सः आचार्याय नमः आचार्यमंत्रः।



## मुनि एक स्थान पर कितने दिन रह सकते हैं?

मासं वासोऽन्यदैकत्र योगक्षेत्रं शुचौ व्रजेत्।
मार्गेऽतीते त्यजेच्चार्थवशादपि न लंघयेत्॥

अर्थ—चातुर्मासके सिवाय हेमन्तादि ऋतुओंमें मुनिगण एक नगरादि स्थानमें एक महीने तक ठहर सकता है। आषाढ़के महीने में वह श्रवणसक्त वर्षायोग स्थानको चला जाय और कार्तिकका महीना बीतते ही उस वर्षायोग स्थानको छोड़दे।

—क्रियाकलापे पृ० ३२६

